# SVAPNAVASAVADATTA

## OF

# BHASA

—:o:—

With English Translation

by

Hari Raghunath Bhagavat. B. A.

---

महाकवि-श्री-भासप्रणीतं

# स्वप्नवासवदत्तं नाटकम् ।



आंग्लभाषानुवादयुतम्

——:o:——

**Ashtekar & Co.**

Poona.

1923.

---

हें पुस्तक रा. म. स. दाते खेडकर वैद्य यांनीं पुणें येथें आपल्या 'वैद्यकपत्रिका' छापखान्यांत छापलें आणि रा. ह. र. भागवत यांनीं ६७४ सदाशिव पेठ पुणें येथें प्रकाशित केलें.

श्रीगणेशाय नमः ।

भासप्रणीतं

# स्वप्नवासवदत्तम् ।

( नान्द्यंते ततः प्रविशति सूत्रधारः )

सूत्रधारः—
उदयनवेंदुसवर्णावासवदत्ताबलौ बलस्य त्वाम् ।
पद्मावतीर्णपूर्णौ वसंतकम्रौ भुजौ पाताम् ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किंतु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अंग ! पश्यामि । ( नेपथ्ये ) उस्सरह उस्सरह अय्या उस्सरह । [ उत्सरतोत्सरतार्याः ! उत्सरत ]

सूत्रधारः—भवतु, विज्ञातम् ।
भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः ।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः ॥ २ ॥
( निष्क्रांतः )

---

( प्रविश्य )

भटौ—उस्सरह उस्सरह अय्या! उस्सरह । [ उत्सरतोत्सरता...

( ततः प्रविशति परिव्राजकवेषो यौगंधरायणः आवंतिकावेषधारिणी वासवदत्ता च )

यौगंधरायणः—( कर्णं दत्वा ) कथमिहाप्युत्सार्यते । कुतः
धीरस्याश्रमसंश्रितस्य वसतस्तुष्टस्य वन्यैः फलै-
र्मानार्हस्य जनस्य वल्कलवतस्त्रासः समुत्पाद्यते ।
उत्सिक्तो विनयादपेतपुरुषो भाग्यैश्चलैर्विस्मितः
कोऽयं भो निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया ॥

# SVAPNAVASAVADATTA.

## ACT I.

[ *After the recital of the benedictory verses, enters the manager* ].

*The manager*—May the arms of Balaráma protect you.—the arms that resemble the rising new moon, that offered wine to his beloved, that are glorious by the advent of Lakshmi, and that appear beautiful in spring. 1.

( *Behind the curtain* )—Make way, make way, people, make way.

*The manager*—Yes, I see it.

All the people, that had gone to the penance forest, are being roughly pushed aside by the servants who are devoted followers of the daughter of the king of Magadha. 2. ( *Exit.*

———o———

( *Enter two soldiers* ).

*Two Soldiers*—Make way, make way, people, make way.

( *Then enter Yaugandharayana dressed as a sanyási, and Vasavadattā dress d like a lady residing in Avanti* ).

*Yaugan.*—( *Gesturing he hears* ) How ! Here also ( people ) are being pushed back ! Why are being troubled, people, who are noble, who have resorted to hermitages, who pass their lives satisfied with forest-fruits, who deserve honour, and who put on bark-garments ? O ! Who is this one, haughty, devoid of humility, and, dazzled by transitory fortune, treats like a village, this peaceful penance-forest, by issuing orders ? 3.

**वासवदत्ता** —अय्य! को एसो उस्सारेदि । [ आर्य, क ए
उत्सारयति । ]

**यौगंधरायण:**—भवति ! यो धर्मादात्मानमुत्सारयति ।

**वासवदत्ता**—अय्य ! ण हि एव्वं वत्तुकामा, अहं वि णा
उस्सारइदव्वा होमि त्ति [ आर्य ? न ह्येवं वक्तुकामा, अहमपि नामो
त्सारयितव्या भवामीति ]

**यौगंधरायण:**—भवति ! एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते ।

**वासवदत्ता**—अय्य ! तह परिस्समो परिखेदं ण उप्पाददी, ज
अअं परिभवो । [ आर्य। तथा परिश्रम: परिखेदं नोत्पादयति यथायं परि
भव: ]

**यौगंधरायण:**—मुक्तोज्झित एष विषयोऽत्रभवत्या । नात्र चिं
कार्या । कुत:,

**पूर्वं त्वयाप्यभिमतं गतमेवमासी-**
**च्छ्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः ।**
**कालक्रमेण जगत: परिवर्तमाना**
**चक्रारपंक्तिरिव गच्छति भाग्यपंक्तिः ॥ ४ ॥**

**भटौ**—उस्सरह अय्या! उस्सरह । [उत्सरतार्या:! उत्सरत ]

(तत: प्रविशति कांचुकीय:)

**कांचुकीय:**—संभाषक ! न खलु न खलूत्सारणा कार्या । पश्य,

**परिहरतु भवान् नृपापवादं**
**न परुषमाश्रमवासिषु प्रयोज्यम् ।**
**नगरपरिभवान् विमोक्तुमेते**
**वनमाभिगम्य मनस्विनो वसन्ति ॥ ५ ॥**

**उभौ**—अय्य ! तह । [आर्य ! तथा ।] (निष्क्रान्तौ)

**यौगंधरायण:**—हंत सविज्ञानमस्य दर्शनम् । वत्से ! उपसर्पाव
स्तावदेनम् ।

**वासवदत्ता**—अय्य तह । [ आर्य । तथा । ]

*Vásavadattá*—Sir, who is this that wards us off?

*Yau.*—(It is) he who tears himself away from virtue.

*Vásava.*—Sir, I do not ask that way; but say "should I also be pushed aside?"

*Yaugan.*—Madam, unrecognised deities are thus disrespected.

*Vasava.*—Sir, fatigue does not cause as much pain as does this insult.

*Yaugan.*—Your ladyship previously experienced the thing [*i. e.* going in state] and has now discarded it (purposely); you need not be anxious about it. For,

formerly, you also attained to your desired object; again you will have it fulfilled along with victory to your lord. In this world, the cycle of fortune, revolving with the course of time, moves like the series of the spokes of a wheel. 4.

*Two soldiers*—Make way, make way, people.

(*Then enters the chamberlain*).

*Cham.*—Sambhāshaka, no, no, do not ward off the people.

You should not give room for blaming the king, nor should you deal harshly with the hermits; (for), these noble minded people resort to, and reside in, the forest, to avoid insults in towns. 5.

*Both*—Yes, sir. (*Exit*).

*Yaugan.*—Oh! his features are intelligent. My daughter, let us approach him.

*Vásava.*—All right, sir.

**यौगंधरायणः**—( उपसृत्य ) भोः ! किंकृतेयमुत्सारणा ।

**कांचुकीयः**—भोस्तपस्विन् ।

**यौगंधरायणः**—( आत्मगतम् ) तपस्विन्निति गुणवान् खल्वयमालापः । अपरिचयात्तु न श्लिष्यते मे मनसि ।

**कांचुकीयः**—भोः ! श्रूयताम् । एषा खलु गुरुभिरभिहितनामधेयस्यास्माकं महाराजदर्शकस्य भागिनी पद्मावती नाम । सैषा नो महाराजमातरं महादेवीमाश्रमस्थामाभिगम्यानुज्ञाता तत्रभवत्या राजगृहमेव यास्यति तदद्यास्मिन्नाश्रमपदे वासोऽस्याः । तद्भवन्तः

**तीर्थोदकानि समिधः कुसुमानि दर्भान्**
**स्वैरं वनादुपनयन्तु तपोधनानि ।**
**धर्मप्रिया नृपसुता न हि धर्मपीडा-**
**मिच्छेत् तपस्विषु कुलव्रतमेतदस्याः ॥ ६ ॥**

**यौगंधरायणः**—( स्वगतम् ) एवम् । एषा सा मगधराजपुत्री पद्मावती नाम, या पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति । ततः

**प्रद्वेषो बहुमानो वा संकल्पादुपजायते ।**
**भर्तृदाराभिलाषित्वादस्यां मे महती स्वता ॥ ७ ॥**

**वासवदत्ता**—( स्वगतम् ) राअदारि अत्ति सुणिअ भइणिआसिणेहो वि एत्थ संपज्जइ । [ राजदारिकेति श्रुत्वा भगिनिकास्नेहोऽपि मेऽत्र संपद्यते ]

(ततः प्रविशति पद्मावती सपरिवारा चेटी च)

**चेटी**—एदु एदु भट्टिदारिआ, इदं अस्समपदं पविसदु । [एत्वेतु भर्तृदारिका, इदमाश्रमपदं प्रविशतु ।]

*Yaugan.*—( *Approaching him* ) Sir , Why this pushing back ?

*Cham.*—Oh ! ascetic !

*Yaugan.*—(*To himself*) His word *tapasvin* is a compliment to me; but being unaccustomed to it, it does not sound well to my mind.

*Cham.*—Hear , Sir. This is the sister, by name Padmāvati, of our lord Darshaka whose name is blessed by the elders ! Having come to see the queen dowager, the mother of our king, who is residin in the hermitage, she is now returning to Rajagriha being permitted by her ladyship. She intends staying in this hermitage to-day. You may, however,

take, without restraint, holy water, samidhas, flowers and darbhas,— the wealth for penance, from the forest Religion being dear to the princess, she does not desire inconvenience to the ascetics in their duties. This is the vow observed by her family. 6.

*Yaugan.*—(*To himself*) I see. This is the Magadha-princess by name Padmāvati, who, it is predicted by the foretellers, Pushpakabhadra and others, is to become the queen of our lord. Then,

the feeling of hatred or respect is engendered by wish. I ( now ) have a feeling of relation about her, because I wish her to become the queen of my lord. 7.

*Vāsava.*—( *To herself* ) Hearing that she is a princess, I come to entertain even sisterly affection for her.

( ततः प्रविशत्युपविष्टा तापसी )

**तापसी**—साअदं राअदारिआए। [ स्वागतं राजदारिकायाः ]

**वासवदत्ता**—( स्वगतम् ) इअं सा राअदारिआ। अभिजणाणुरूवं खु से रूवं। [ इयं सा राजदारिका। आभिजनानुरूपं खल्वस्या रूपम्। ]

**पद्मावती**—अय्ये! वंदामि। [ आर्ये वंदे ]

**तापसी**—चिरं जीव। पविस जादे! पविस। तवोवणाणि णाम अदिहिजणस्स सअगेहं। [ चिरं जीव। प्रविश जाते प्रविश। तपोवनानि नामातिथिजनस्य स्वगेहम् ]

**पद्मावती**—भोदु भोदु। अय्ये! विस्सत्थाह्मि। इमिणा बहुमाणवअणेण अणुग्गाहिदाह्मि [ भवतु भवतु। आर्ये विश्वस्तास्मि। अनेन बहुमानवचनेनानुगृहीतास्मि ]।

**वासवदत्ता**—( स्वगतम् ) ण हि रूवं एव्व, वाआ वि खुसे महुरा। [न हि रूपमेव, वागपि खल्वस्या मधुरा]

**तापसी**—भद्दे! इमं दाव भद्दमुहस्स भइणिअं कोच्चि राआ ण वरेदि। [भद्रे! इमां तावत् भद्रमुखस्य भगिनिकां कश्चिद्राजा न वरयति ?]

**चेटी**—अत्थि राआ पज्जोदो णाम उज्जइणीए। सो दारअस्स करणादो दूदसंपादं करेदि। [ अस्ति राजा प्रद्योतो नामोज्जयिन्याः। स दारकस्य कारणात् दूतसंपातं करोति ]

**वासवदत्ता**—(आत्मगतम्) भोदु भोदु। एसा अ अत्तणीआ दाणिं संवुत्ता। [ भवतु भवतु। एषा चात्मीयेदानीं संवृत्ता ]

**तापसी**—अहो खु इअं आइदी इमस्स बहुमाणस्स। उभआणि राअउळाणि महत्तराणि त्ति सुणीअदि। [ अहो खल्वियमाकृतिरस्य बहुमानस्य। उभे राजकुले महत्तरे इति श्रूयते ]

( *Then enter Padmāvati with attendants, and companion* ).

*Companion*—Well, may the princess come in. May she enter this hermitage.

( *Then enters a female ascetic seated* ).

*Female ascetic*—Welcome, princess.

*Vāsava.*—( *To herself* ) This is the princess· Really her features agree with noble birth.

*Padmāvati.*—Venerable lady, I bow to you.

*Fe. asce*—May you be long-lived ! Enter, darling, enter. Hermitages are, indeed, their own houses in the case of guests.

*Padmā.*— Well, well, I am quite comfortable, mother. I am much obliged by these respectful words.

*Vāsava.*—( *To herself* ) Not only the features, her speech also is sweet.

*Fe. asce.*— ( *To the companion* ) Fortunate one, does no king demand the hand of this sister of the fortunate one ( the king ) ?

*Compa.*—Yes , there is the king of Ujjayini, by name Pradyota. He has sent a messenger for his son.

*Vāsava.*—( *To herself* ) Well, Well. She now becomes related to me.

*Fe. asc.*—This beauty deserves this honour. It is heard that both these are great royal families.

**पद्मावती**—अय्य ! किं दिट्ठो मुणिजणो अत्ताणं अणुग्गहीदुं अभिप्पेदप्पदाणेण तवस्सिजणो उवणिमन्तीअदु दाव को किं इत्थ इच्छदि त्ति। [ आर्य ! किं दृष्टो मुनिजन आत्मानमनुग्रहीतुम् । अभिप्रेतप्रदानेन तपस्विजन उपनिमंत्र्यतां तावत् कः किमत्रेच्छतीति ]

**कांचुकीयः**—यदभिप्रेतं भवत्या। भो भो आश्रमवासिनस्तपस्विनः! शृण्वन्तु शृण्वन्तु भवन्तः । इहात्रभवती मगधराजपुत्री अनेन विस्रम्भेणोत्पादितविस्रंभा धर्मार्थमर्थेनोपनिमंत्रयते ।

**कस्यार्थः कलशेन को मृगयते वासो यथानिश्चितं**
**दीक्षां पारितवान् किमिच्छति पुनर्देयं गुरोर्यद्भवेत् ।**
**आत्मानुग्रहमिच्छतीह नृपजा धर्माभिरामप्रिया**
**यद्यस्यास्ति समीप्सितं वदतु तत् कस्याद्य किं दीयताम् ॥**

**यौगंधरायणः**—हंत दृष्ट उपायः। ( प्रकाशम् ) भोः । अहमर्थी।

**पद्मावती**—दिट्ठिआ सहळं मे तवोवणाभिगमणं। [दिष्ट्या सफलं मे तपोवनाभिगमनम् ]

**तापसी**—संतुट्ठतपस्सिजणं इदं अस्समपदं । आअंतुएण इमिणा होदव्वं । [संतुष्टतपस्विजनमिदमाश्रमपदम् । आगंतुकेनानेन भवितव्यम् ]

**कांचुकीयः**—भोः ! किं क्रियताम्?

**यौगंधरायणः**—इयं मे स्वसा। प्रोषितभर्तृकामिमामिच्छाम्यत्रभवत्या कंचित् कालं परिपाल्यमानाम् । कुतः

**कार्यं नैवार्थैर्नापि भोगैर्न वस्त्रै-**
**र्नाहं काषायं वृत्तिहेतोः प्रपन्नः ।**
**धीरा कन्येयं दृष्टधर्मप्रचारा**
**शक्ता चारित्रं रक्षितुं मे भगिन्याः ॥९॥**

*Padmā.*—Sir, did you see any ascetic who would favour me ? Let the ascetics be invited and asked what they desire here. informing them that their desires will be fulfilled.

*Cham.*—As you like. O Ascetics residing in the hermitage ! Hear, hear ! This Magadha princess being pleased with this reception [ confidence ], invites you, in discharge of her duty, that you may solicit.

Who requires vessel, who wants desired clothings, who, after the completion of study, requires anything for being given to his preceptor ? The princess, to whom duty appears beautiful and pleasant, wishes to be favoured. So let him, who desires anything, speak out what should be given to him to-day. 8.

*Yaugan.*—Yes, I see a way. ( *Openly* ) Sir, I am a supplicant.

*Padmā.*—Fortunately, my coming to the hermitage has borne fruit.

*Fe. ascetic*—The ascetics in this hermitage are contented. He must be a new comer.

*Cham.*—Oh ! What is your wish ?

*Yaugan.*—This is my sister. Her husband having gone on travels, I wish her to be looked after, for some time by your ladyship; because

I do not want wealth, nor pleasures, nor garments. I have not put on the red garments for my livelihood. This princess is noble-minded and cares for the propogation of religion; and so she is able to take good care of my sister's character. 9

**वासवदत्ता**—( आत्मगतम् ) हं इह मं णिक्खिविदुकामो अय्ययोगंधरायणो । होदु, अविआरिअ कमं ण करिस्सदि । [ हम् इह मां निक्षेप्तुकाम आर्ययौगंधरायणः । भवतु, अविचार्य क्रमं न करिष्यति । ]

**कांचुकीयः**—भवति ! महती खल्वस्य व्यपाश्रयणा । कथं प्रतिजानीमः ? कुतः,

**सुखमर्थो भवेत् दातुं सुखं प्राणाः सुखं तपः ।**
**सुखमन्यद्भवेत् सर्वं दुःखं न्यासस्य रक्षणम् ॥१०॥**

**पद्मावती**— अय्य पढमं उग्घोसिअ को किं इच्छदि त्ति अजुत्तं दाणिं विआरिदुं । जं एसो भणादि, तं अणुचिट्ठदु अय्यो । [ आर्य ! प्रथममुद्घोष्य कः किमिच्छतीत्ययुक्तमिदानीं विचारयितुम् । यदेष भणति, तदनुतिष्ठत्वार्यः ]

**कांचुकीयः**—अनुरूपमेतद्भवत्याभिहितम् ।

**चेटी**—चिरं जीव; भट्टिदारिआ एवं सच्चवादिणी । [ चिरं जीवतु भर्तृदारिकैवं सत्यवादिनी ]

**तापसी**—चिरं जीवदु भद्दे । ( चिरं जीवतु भद्रे ) ———

**कांचुकीयः**—भवति, तथा । ( उपगम्य ) भोः ! अभ्युपगतमत्रभवतो भगिन्याः परिपालनमत्रभवत्या ।

**यौगंधरायणः**—अनुगृहीतोऽस्मि तत्रभवत्या । वत्से, उपसर्पात्रभवतीम् ।

**वासवदत्ता**—(आत्मगतम् ) का गई । एसा गच्छामि मंदभाआ । [ का गतिः । एषा गच्छामि मंदभागा ]

**पद्मावती**—होदु होदु । अत्तणीआ दाणिं संवुत्ता । [ भवतु भवतु । आत्मीयेदानीं संवृत्ता ]

**तापसी**—जा ईदिसी से आइदी, इयं वि राअदारिआत्ति तक्केमि । [ या ईदृश्यस्या आकृतिः, इयमपि राजदारिकेति तर्कयामि ]

**चेटी**—सुट्ठु अय्या भणादि । अहं वि अणुहूदसुहात्ति पेक्खामि । [ सुष्ठु आर्या भणति । अहमपि अनुभूतसुखेति पश्यामि ]

*Vāsava.*—( *To herself* ) I see, noble Yaugandharayana intends keeping me here. Let him. He will not take a step unless it? is thought out.

*Cham.*—Princess ! This request is a difficult one. How should we accept it Because

it is easy to give wealth, to give protection to life and to penance; any thing else can be done easily; but guarding a deposit is difficult. 10.

*Padmā.*—Sir, it is improper now to vascilate after having proclaimed "who wants what ? " You should abide by what he says.

*Cham.*—These words of your ladyship are worthy of you.

*Compa.*—May the truth-speaking princess be long-lived.

*Fe. ascetic*—Live long, my darling.

*Cham.*—Yes, your ladyship. (*Approaching*) Her ladyship has promised to protect your sister.

*Yaugan.*—I am favoured by her ladyship. Oh daughter ! Approach her ladyship.

*Vāsava.*—(*To herself* ) What to do ? Here do I go, the unfortunate one.

*Padmā.*—Well, well. She has now become mine own.

*Fe. ascetic.*—That such are her features, I guess she also is a princess !

*Comp.*—The revered lady speaks well. I also think her to have experienced happiness.

**यौगंधरायणः**--( आत्मगतम् ) हंत भोः ! अर्धमवसितं भारस्य यथा मंत्रिभिः सह समर्थितं, तथा परिणमति । ततः प्रतिष्ठिते स्वामिनि तत्रभवतीमुपनयतो मे इहात्रभवती मगधराजपुत्री विश्वासस्थानं भविष्यति कुतः,

पद्मावती नरपतेर्महिषी भवित्री
  दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा ।
तत्प्रत्ययात् कृतमिदं न हि सिद्धवाक्या-
  न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि ॥११॥

(ततः प्रविशति ब्रह्मचारी)

**ब्रह्मचारी**-- ( ऊर्ध्वमवलोक्य ) स्थितो मध्याह्नः । दृढमस्मि परिश्रान्तः । अथ कस्मिन् प्रदेशे विश्रमयिष्ये । (परिक्रम्य) भवतु, दृष्टम् अभितस्तपोवनेन भावितव्यम् । तथाहि--

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
  वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः ।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
  निःसंदिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥१२

यावत् प्रविशामि । (प्रविश्य) अये आश्रमविरुद्धः खल्वेष जनः (अन्यतो विलोक्य) अथवा तपस्विजनोऽप्यत्र । निर्दोषमुपसर्पणम् । अये स्त्रीजनः ।

**कांचुकीयः**--स्वैरं स्वैरं प्रविशतु भवान् । सर्वजनसाधारणमाश्रमपदं नाम ।

**वासवदत्ता**-- हं ।

*Yaugan.*—( *To himself* ) Oh ! Half the burden is taken off ! It is coming about as planned with the ministers. Then this her ladyship, the Magadha princess, will be my object of confidence, till I take back her ladyship ( Vāsavadattā ) to my lord after he is firmly seated. For,

I have done this, relying on those who predicted Padmāvati becoming the queen of the king, but who also foretold a previous calamity. Fate does not go against the well-thought out words of the Siddhas.

( *Then enters a Brahmachārin* ).

*Brahma.*—( *Looking upwards* ) It is noon. I am greatly tired. Where should I take rest ? ( *Walking* ) Yes, I see. This appears to be a penance-forest all round. For,

the deer are roaming fearlessly without getting shy and with confidence engendered by the place; all the trees, reared with tenderness, have their branches full of flowers and fruits; the cows that constitute the wealth ( of the Rishis ) are intensely dark-coloured; there is no cultivation in any direction. No doubt, this is a penance-forest; also because the smoke is (seen) coming from many places. 12.

Well, I may enter. ( *Entering* ) Oh ! ( The presence of) this man [ the chamberlain ] is against ( the system of ) the hermitage. ( *Looking in another direction* ) Why, ascetics also are here ! So I can approach without impropriety. Oh ! ladies !

*Cham.*—Without hesitation, you may come in.

*Vāsava.*—Ah !

**पद्मावती**—अय्यो परपुरुसदंसणं परिहरदि अय्या । भोदु, सुपरि-वालणीओ खु मण्णासो । [आर्या परपुरुषदर्शनं परिहरत्यार्या । भवतु सुपरिपालनीयः खलु मन्न्यासः ।]

**कांचुकीयः**—भोः ! पूर्वं प्रविष्टाः स्मः । प्रतिगृह्यतामातिथिसत्कारः।

**ब्रह्मचारी**—(आचम्य) भवतु भवतु । निवृत्तपरिश्रमोऽस्मि ।

**यौगंधरायणः**—भोः । कुत आगम्यते, क गन्तव्यं, क्वाधिष्ठानमार्यस्य

**ब्रह्मचारी**—भोः ! श्रूयताम् । राजगृहतोऽस्मि । श्रुतिविशेषणार्थं वत्सभूमौ लावाणकं नाम ग्रामस्तत्रोषितवानस्मि ।

**वासवदत्ता**—(आत्मगतम्) हा लावाणअं णाम । लावाणअ-संकित्तणेण पुणो णवीकिदो विअ मे सन्दावो । [हा लावाणकं नाम लावाणकसंकीर्तनेन पुनर्नवीकृत इव मे संतापः]

**यौगंधरायणः**—अथ परिसमाप्ता विद्या ।

**ब्रह्मचारी**—न खलु तावत् ।

**यौगंधरायणः**—यद्यनवसिता विद्या, किमागमनप्रयोजनम् ।

**ब्रह्मचारी**—तत्र खल्वतिदारुणं व्यसनं संवृत्तम् ।

**यौगंधरायणः**—कथमिव ।

**ब्रह्मचारी**—तत्रोदयनो नाम राजा प्रतिवसति ।

**यौगंधरायणः**—श्रूयते तत्रभवानुदयनः । किं सः ।

**ब्रह्मचारी**—तस्यावन्तिराजपुत्री वासवदत्ता नाम पत्नी दृढमभि-प्रेता किल ।

**यौगंधरायणः**—भवितव्यम् । ततस्ततः ।

**ब्रह्मचारी**—ततस्तस्मिन् मृगयानिष्क्रान्ते राजनि ग्रामदाहेन सा दग्धा ।

*Padma.*—Oh ! This lady avoids being seen by unfamiliar men ! Well, the deposit with me is indeed worthy of being carefully looked after.

*Cham.*—Sir, we have come earlier; accept hospitality proper to a guest.

*Brahma.*—(*Sipping the water*) Yes, yes; gone is my fatigue.

*Yaugan.*—Sir where do you come from, where do you mean to go, and where do you reside ?

*Brahma.*—Hear, sirs I am from Rajagriha. There is a village called Lāvánaka in Vatsa's territory; there I was staying for distinguishing myself in the study of the Vedas.

*Vāsava.*—(*To herself*) Ah ! " called Lāvānaka ! " My grief is as it were renewed at the utterance of the word Lāvānaka !

*Yaugan.*—Is the study finished ?

*Brahma.*—No, not yet

*Yaugan.*—If the study is not finished, what is the cause of your coming here ?

*Brahma.*—There a great calamity befell (us).

*Yaugan.*—How ?

*Brahma.*—There lives a king by name Udayana.

*Yaugan.*—We have heard of the respected Udayana. What about him ?

*Brahma.*-His wife was Vasavadattā by name, the daughter of the king of Avanti; to her he was greatly attached.

*Yaugan.*—May be. Then ?

*Brahma.*—Then, when the king had gone out a hunting, she was burnt by fire (along) with the village.

**वासवदत्ता**—( आत्मगतम् ) अळिअं अळिअं एदं । जीवामि मंदभाआ । [अलीकमलीकमेतत् । जीवामि मंदभागा]

**यौगंधरायणः**—ततस्ततः ?

**ब्रह्मचारी**—ततस्तामभ्यवपत्तुकामो यौगंधरायणो नाम सचिवस्तस्मिन्नेवाग्नौ पतितः ।

**यौगंधरायणः**—सत्यं पतित इति । ततस्ततः ।

**ब्रह्मचारी**—ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोगजनितसंतापस्तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः ।

**वासवदत्ता**—( आत्मगतम् ) जाणामि जाणामि अय्यउत्तस्य मइ साणुक्कोसत्तणं । [ जानामि जानाम्यार्यपुत्रस्य मयि सानुक्रोशत्वम् ]

**यौगंधरायणः**—ततस्ततः ।

**ब्रह्मचारी**—ततस्तस्याः शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य राजा मोहमुपगतः ।

**सर्वे**-हा ।

**वासवदत्ता**—(स्वगतम्) सकामो दाणिं अय्यजोअंधराअणे होदु । [ सकाम इदानीमार्ययौगंधरायणो भवतु ]

**चेटी**--भट्टिदारिए, रोदिदि खु इअं अय्या [ भर्तृदारिके, रोदिति खल्वियमार्या ]

**पद्मावती**—साणुक्कोसाए होदव्वं । [ सानुक्रोशया भवितव्यम् ]

**यौगंधरायणः**—अथकिमथकिम् । प्रकृत्या सानुक्रोशा मे भगिनी । ततस्ततः ।

**ब्रह्मचारी**—ततः शनैः शनैः प्रतिलब्धसंज्ञः संवृत्तः ।

**पद्मावती**—दिट्ठिआ धरइ, मोहं गदो त्ति सुणिअ सुण्णं विअ मे हिअअं । [ दिष्ट्या ध्रियते । मोहं गत इति श्रुत्वा शून्यमिव मे हृदयम् ]

*Vásava.*—( To herself ) False, 'tis false. Here I live the unfortunate one.

*Yaugan.*—Then ?

*Brahma.*—Then the minister Yaugandharâyana, with the intention of saving her, fell himself into the same fire.

*Yaugan.*—It is true he fell. Then what ?

*Brahma.*—Then, the king, on return, full of grief caused by being separated from them, and coming to know what had happened, wished to give up life by throwing himself into that very fire. But he was held back by his ministers with great difficulty.

*Vāsava.*—( *To herself* ) I know the affection of my lord for me.

*Yaugan.*—Then ?

*Brahma.*—Then the king held to his heart the remnants of ornaments put on by her and swooned.

*All*—Ah !

*Vāsava.*—( *To herself* ) Let noble Yaugandharáyana's wishes be realised now.

*Comp.*—Princess, this lady is weeping.

*Padmá.*—She may be tender-hearted.

*Yauan.*—Yes, yes. My sister is kind-hearted by nature. Then, then ?

*Brahma.*—Then very slowly he regained consciousness.

*Padma.*—Fortunately, he is living ! My mind became, as it were, blank, on hearing that he swooned.

**यौगंधरायणः—** ततस्ततः ?

**ब्रह्मचारी—**ततः स राजा महीतलपरिसर्पणपांसुपाटलशरीरः सहसोत्थाय 'हा वासवदत्ते ! हा अवंतिराजपुत्रि ! हा प्रिये ! हा प्रियशिष्ये !' इति किमपि किमपि बहु प्रलपितवान् । किं बहुना,

**नैवेदानीं तादृशाश्चक्रवाका**
**नैवाप्यन्ये स्त्रीविशेषैर्वियुक्ताः ।**
**धन्या सा स्त्री यां तथा वेत्ति भर्ता**
**भर्तृस्नेहात् सा हि दग्धाप्यदग्धा ॥१३॥**

**यौगंधरायणः—**अथ भोः! तं तु पर्यवस्थापयितुं न कश्चिद्यत्नवानमात्यः ।

**ब्रह्मचारी—** अस्ति रुमण्वान्नामामात्यो दृढं प्रयत्नवांस्तत्रभवन्तं पर्यवस्थापयितुम् । स हि,

**अनाहारे तुल्यः प्रततरुदितक्षामवदनः**
**शरीरे संस्कारं नृपतिसमदुःखं परिवहन् ।**
**दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं**
**नृपः प्राणान् सद्यस्त्यजति यदि तस्याप्युपरमः ॥१४॥**

**वासवदत्ता—** ( स्वगतम् ) दिट्ठिअ सुणिक्खित्तो दाणीं अय्यउत्तो ।
[ दिष्ट्या सुनिक्षिप्त इदानीमार्यपुत्रः ]

**यौगंधरायणः—** ( आत्मगतम् ) अहो महद्भारमुद्वहति रुमण्वान् । कुतः,

**सविश्रमो ह्ययं भारः प्रसक्तस्तस्य तु श्रमः ।**
**तस्मिन् सर्वमधीनं हि यत्राधीनो नराधिपः ॥१५॥**

*Yaugan.*—Then ?

*Brahma.*—Then, that king, with his body reddened with dust because of his rolling on the ground, got up suddenly, and began to cry out incoherently "O Vāsavadattā! O princess of Avanti! O beloved one! O dear disciple!" What more (can I say)?--

Even the chakravaka birds are not like him, nor others also separated from their beloved ones. Blessed is that woman who is appreciated in that way by her husband. Verily, though burnt, she lives, because of such attachment on the part of the husband. 13.

*Yaugan.*—Then, Sir, did any minister not attempt to bring him to consciousness ?

*Brahma.*—Yes, the minister Rumanván made great efforts to bring the king to consciousness. He

equally with the king, abstained from taking food. His face got emaciated, owing to continuous crying. He performed bodily functions in a way which showed him to be aggrieved equally with the king. Day and night he attended upon the king with diligence. If the king perchance dies, he also would give up his life. 14.

*Vásava.*—(*To herself*) Fortunately my lord is now in good hands.

*Yaugan.*—(*To himself*) Oh! Rumanvān bears a heavy burden! Because,

this burden of mine is followed by rest; but his exertion is continuous. Everything depends on him who has to take care of the king. 15.

( प्रकाशम् ) अथ भोः! पर्यवस्थापित इदानीं स राजा ?

[ब्रह्मचारी--तदिदानीं न जाने । इह तया सह हसितं, इह तया सह कथितं, इह तया सह पर्युषितं, इह तया सह कुपितं, इह तया सह शयितं इत्येवं तं विलपन्तं राजानममात्यैर्महता यत्नेन तस्मात् ग्रामात् गृहीत्वापक्रान्तम् । ततो निष्क्रांते राजनि प्रोषितनक्षत्रचंद्र मिव नभोऽरमणीयः संवृत्तः स ग्रामः । ततोऽहमपि निर्गतोऽस्मि ।

**तापसी**—सो खु गुणवंतो णाम राआ, जो आअन्तुएण विइमिणा एव्वं पसंसीअदि । [ स खलु गुणवान् नाम राजा, य आगंतुकेनाप्यनेनैवं प्रशस्यते । ]

**चेटी**—भट्टिदारिए किंणुखु अवरा इत्थिआ तस्स हत्थं गमिस्सदि । [ भर्तृदारिके, किन्तु खलु अपरा स्त्री तस्य हस्तं गमिष्यति ]

**पद्मावती**—( आत्मगतम् ) मम हिअएण एव्व सह मंतिदं । [ मम हृदयेनैव सह मंत्रितम् ]

**ब्रह्मचारी**—आपृच्छामि भवंतौ । गच्छामस्तावत् ।

**उभौ**—गम्यतामर्थसिद्धये ।

**ब्रह्मचारी**—तथास्तु । ( निष्क्रांतः )

**यौगंधरायणः**—साधु, अहमपि तत्रभवत्याभ्यनुज्ञातो गंतुमिच्छामि ।

**कांचुकीयः**—तत्रभवत्याभ्यनुज्ञातो गंतुमिच्छति किल ।

**पद्मावती**—अय्यस्स भइणिआ अय्येण विना उक्कण्ठिस्सिदि । [ आर्यस्य भगिनिकाऽऽर्येण विनोत्कंठिष्यते ]

**यौगंधरायणः**—साधुजनहस्तगतैषा नोत्कंठिष्यति । (कांचुकीयमवलोक्य) गच्छामस्तावत् ।

**कांचुकीयः**—गच्छतु भवान् पुनर्दर्शनाय ।

**यौगंधरायणः**—तथास्तु । ( निष्क्रांतः )

(*Openly*) Then, Sir, has the king now recovered?

*Brahma.*—That I do not know. " Here I laughed with her, here I talked to her, here I sat with her, here I got angry with her, here I slept with her, " in this way the king was crying, when the ministers, with great efforts removed him from the village and went away (with him). After the king had gone away, the village lost all its charms, just as the sky does when the stars and the moon disappear. Then I also came away.

*Fe. ascetic*—Verily that king must be possessed of high qualities who is thus applauded even by a stranger!

*Comp.*—Princess , is it possible any other woman will marry him ?

*Padmà*—( *To herself* ) She spoke just what my heart speaks to me.

*Brahma.*—I take leave of you both. I shall be going now.

*Both*—May you go. Success be with you.

*Brahma.*—May it be so. [ *Exit* ].

*Yaugan.*—Well, I also wish to go with the permission of the princess.

*Cham.*—He wishes to go with your ladyship's permission.

*Padmà.*—Sir, your younger sister will feel anxiety because of your absence.

*Yaugan.*—She wont feel any anxiety as she is under the care of good people. ( *Turning to the chamberlain* ) We shall be going now.

*Cham.*—May you go to return.

*Yaugan.*—May it be so. [ *Exit* ].

**कांचुकीयः**—समय इदानीमभ्यंतरं प्रवेष्टुम् ।

**पद्मावती**—अय्ये ! वंदामि । [ आर्ये, वंदे ]

**तापसी**—जादे ! तव सदिसं भत्तारं लभेहि । [ जाते ! त्व सदृशं भर्तारं लभस्व ]

**वासवदत्ता**—अय्ये! वंदामि दाव अहं । [ आर्ये ! वंदे तावदहम्

**तापसी**—तुवं पि अइरेण भत्तारं समासादेहि । [ त्वमपि अचिरेण भर्तारं समासादय]

**वासवदत्ता**—अणुग्गहीदह्मि । [अनुगृहीतास्मि]

**कांचुकीयः**—तदागम्यताम्, इत इतो भवति । संप्रति हि,

**खगा वासोपेताः सलिलमवगाढो मुनिजनः**
**प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।**
**परिभ्रष्टो दूरात् रविरपि च संक्षिप्तकिरणो**
**रथं व्यावृत्यासौ प्रविशति शनैरस्तशिखरम् ॥**

( निष्क्रान्ताः सर्वे ) **इति प्रथमोऽङ्कः ॥**

---

## अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति चेटी )

**चेटी**— कुंजरिए ! कुंजरिए कहिं कहिं भट्टिदारिआ पदुमावदी किं भणासि, एसा भट्टिदारिआ माहवीळदामण्डवस्स परसदो कन्दुएण कीळादित्ति । जाव भट्टिदारिअं उवसप्पामि । (परिक्रम्यावलोक्य) अम्मे इअं भट्टिदारिआ उक्किरदकण्णचुळीएण वाआमसंजादसेदबिंदुविइत्तिदेण परिस्संतरमणीअदंसणेण मुहेण कन्दुएण कीळन्दी इदो एव्व आअच्छदि जाव उवसप्पिस्सं । [ कुंजरिके! कुंजरिके! कुत्र कुत्र भर्तृदारिका पद्मावती किं भणसि, एषा भर्तृदारिका माधवीलतामंडपस्य पार्श्वतः कंदुकेन क्रीडतीति, यावत् भर्तृदारिकामुपसर्पामि । अम्मो इयं भर्तृदारिका उत्कृतकर्णचूलिकेन व्यायामसजातस्वेदबिंदुविचित्रितेन परिश्रांतरमणीयदर्शनेन मुखेन कंदुकेन क्रीडंतीत एवागच्छति । यावदुपसर्पिष्यामि ।] ( निष्क्रांता ) **प्रवेशकः** ।

*Cham.*—It is time now to get inside.

*Padmá.*—Venerable lady, I bow to you.

*Fe. ascetic.*—My darling, may you obtain a husband worthy of you.

*Vasava.*—Venerable lady, I also bow to you.

*Fe. ascetic.*—May you also be united with your husband before long.

*Vásava.*—I am greatly obliged.

*Cham.*—May you come now. This way, this way, princaess. Now,

birds have returned to the nests; the ascetics are bathing in water; kindled fire is shining; the smoke pervades the penance-forest; and this sun also, falling down from high, with contracted rays, has turned back the chariot and is gradually coming to the western summit. [ *Exeunt all.*

*Ends the first Act.*

———:o:———

## Act II.

. ( *Then enters the female companion* ).

*Com.*—Kunjarika, O kunjarika ! Where is princess Padmávati ? What do you say ? That the princess is playing with ball near the bower of Madhavi creepers ? Just I shall go to her. Oh ! Here is the princess herself coming here, playing with ball, her face having crest-like ears pointing upwards; being variegated with drops of perspiration produced by exertion, and looking beautiful through fatigue. I shall approach her. [ *Exit.*

*Ends the Praveshaka.*

————

(ततः प्रविशति कंदुकेन क्रीडंती पद्मावती सपरिवारा वासवदत्तया सह

**वासवदत्ता**--हळा! एसो दे कन्दुओ। [हला! एष ते कंदुकः

**पद्मावती**—अय्ये! भोदु दाणिं एत्तअं [आर्ये, भवत्विदानीमेता वत् ]

**वासवदत्ता**—हळा! अदिचिरं कंदुएण कीळिअ अहिअसंजादरा आ परकेरआ विअ दे हत्था संवुत्ता [हळा। अतिचिरं कंदुकेन क्रीडित्वा ऽधिकसंजातरागौ परकीयाविव ते हस्तौ संवृत्तौ]

**चेटी**—कीळदु कीळदु दाव भट्टिदारिआ। णिव्वत्तीअदु दाव अ ण्णाभावरमणीओ काळो [क्रीडतु क्रीडतु तावत् भर्तृदारिका। निर्वर्त्यता तावत् अयं कन्याभावरमणीयः कालः]

**पद्मावती**—अय्ये, किं दाणिं मं ओहसिदुं विअ णिज्झाअसि आर्ये। किमिदानीं मामपहसितुमिव निध्यायसि]

**वासवदत्ता**—णहि णहि। हळा! अधिअं अज्ज सोहदि। अभिदं विअ दे अज्ज वरमुहं पेक्खामि। [नहि नहि। हळा! अधिकमद्य शोभते अभित इव तेऽद्य वरमुखं पश्यामि]

**पद्मावती**—अवेहि। मा दाणिं मं ओहस [अपेहि। मेदानीं मामपहस ]

**वासवदत्ता**—अत्थि उज्जइणीओ राआ पज्जोदो णाम। तस्स बळपरिमाणणिव्वुत्तं णामहेअं महासेणो त्ति [अस्ति उज्जयिन्या राजा प्रद्योतो नाम। तस्य बलपरिमाणनिर्वृत्तं नामधेयं महासेन इति]

**चेटी**—भट्टिदारिआ तेण रञ्ञा सह संबंधं णेच्छदि [भर्तृदारिका तेन राज्ञा सह संबंधं नेच्छति]

**वासवदत्ता**--एसहि तुह्णिआ भविस्सम्महासेणवहू! । ( एषापि तूष्णीका भविष्यन्महासेनवधूः )

**पद्मावती**—को एसो महासेणो णाम ( क एष महासेनो नाम )

( *Then enter Padmāvati playing with ball,* *d accompanied by attendants and Vāsavadattā* ).

*Vāsava.*—Dear here is your ball

*Padmà* —Madam, enough of it now.

*Vasava.*—Dear, your hands with their red-ess increased because of your playing long with e ball, now appear as if not your own.

*Com.*—Let the princess play on for some time. et her enjoy this pleasant time of girlhood.

*Padmá.*—Venerable lady, why are you looking tently at me as if to jest with me ?

*Vàsava.*—No, no, you look more charming ow. I see as if the face of your husband is near ou.

*Padmá.*—Get away, don't jest with me.

*Vasava.*—Here I hold my tongue, O you the vould-be daughter in law of Mahásena ?

*Padmā.*—Who is this Mahásena ?

*Vāsava.*—There is the king of Ujjayini by ame Pradyota. He is designated Mahāsena be-ause of the vastness of his army.

**वासवदत्ता**--अह केण खु दाणिं अभिळसदि [अथ केन दानीमाभिलषति ]

**चेटी**—अत्थि वच्छराओ उअअणो णाम । तस्स गुणाणि दारिआ अभिळसदि [अस्ति वत्सराज उदयनो नाम । तस्य गुणा दारिकाभिलषति ]

**वासवदत्ता**— (आत्मगतम्) अय्यउत्तं भत्तारं अभि (प्रकाशम्) केण कारणेण । [ आर्यपुत्रं भर्तारमभिलषति । केन का

**चेटी**—साणुक्कोसो त्ति । [सानुक्रोश इति]

**वासवदत्ता**—(आत्मगतम्) जाणामि जाणामि । अअं वि एव्वं उम्मादिदो । [जानामि जानामि । अयमपि जन एवमुन्मादि

**चेटी**—भट्टिदारिए ! जदि सो राआ विरूवो भवे । [भर्तृदारि स राजा विरूपो भवेत्]

**वासवदत्ता**—णहि णहि दंसणीओ एव्व । [नहि नहि । दर्श एव ]

**पद्मावती**--अय्ये ! कहं तुवं जाणासि [आर्ये कथं त्वं जान

**वासवदत्ता**--(आत्मगतम् ) अय्यउत्तपक्खवादेण अति समुदाआरो । किं दाणिं करिस्सं । होदु दिट्ठं । (प्रकाशम् ) ह एव उज्जइणीओ जणो मन्तेदि । [आर्यपुत्रपक्षपातेनातिक्रांतः समुदाचा किमिदानीं करिष्यामि ! भवतु, दृष्टम्, हळा ! एवमुज्जयिन्या जनो मंत्र

**पद्मावती**—जुज्जइ । ण खु एसो उज्जइणीदुळ्ळहो । सव्व मणोभिरामं खु सोभग्गं णाम । [ युज्यते । न खल्वेष उज्जयिनीदुर्लभ सर्वजनमनोभिरामं खलु सौभाग्यं नाम ]

*Com.*—The princess does not wish to be rela- to that king.

*Vāsava.*—Then to whom indeed does she wish be related?

*Com.*—there is the king of the Vatsas, called ayana. The princess likes his qualities.

*Vāsava.*—( *To herself* ) She wants my lord for husband ! (*Openly* ) Why ?

*Com.*—Because he is tender-hearted.

*Vasava.*—( *To herself* ) I know, I know. had gone mad like this.

*Com.*—Princess, if that king happens to be ormed ?

*Vasava.*-- No, No. He is really handsome.

*Padmā.*—Madam, how do you know ?

*Vasava.*—( *To herself* ) Partiality for my lord s made me overlook propriety. What shall I now ? Well, I have it. ( *Openly*) Oh ! the ople of Ujjayini were saying so.

*Padmā.*— 'Tis all right. Not rarely he visits ayni. and beauty really captivates the mind of

( प्रविश्य )

**धात्री**--जेदु भट्टिदारिआ। भाट्टिदारिए, दिण्णासि। [ भर्तृदारिका। भर्तृदारिके ! दत्तासि ]

**वासवदत्ता**—अय्ये कस्स [ आर्ये कस्मै ]

**धात्री**—वच्छराअस्स उदअणस्स। [ वत्सराजायोदयनाय ]

**वासवदत्ता**--अह कुसळी सो राआ। [ अथ कुशली स रा

**धात्री**--कुसळी सो आअदो। तस्स भट्टिदारिआ पडि अ ! [ कुशली स आगतः। तस्य भर्तृदारिका प्रतीष्टा च ]

**वासवदत्ता**—अच्चाहिदं। [ अत्याहितम् ]

**धात्री**—किं एत्थ अच्चाहिदं। [ किमत्रात्याहितम् ]

**वासवदत्ता**—ण हु किंचि। तह णाम संतप्पिअ उदा होदि त्ति। [ न खलु किंचित्। तथा नाम संतप्योदासीनो भवतीति ]

**धात्री**—अय्ये ! आअमप्पहाणाणि सुळहपय्यवत्थाणाणि पुरुसहिअआणि होन्ति। [ आर्ये, आगमप्रधानानि सुलभपर्यवस्थ महापुरुषहृदयानि भवन्ति ]

**वासवदत्ता**—अय्य ! सअं एव्व तेण वरिदा। [ आर्ये ! मेव तेन वृता ? ]

**धात्री**—णहि णहि। अण्णप्पओअणेण इह आअदस्स अभि विज्जाणवओरूवं पेक्खिअ सअं एव्व महाराएण दिण्णा। [ नहि अन्यप्रयोजनेनेहागतस्याभिजनाविज्ञानवयोरूपं दृष्ट्वा स्वयमेव महाराजेन द

**वासवदत्ता**—( आत्मगतम् ) एव्वं। अणवरद्धो दाणिं अय्यउत्तो। [ एवम्। अनपराद्ध इदानीमत्रार्यपुत्रः ]

( प्रविश्यापरा )

**चेटी**—तुवरदु तुवरदु दाव अय्या। अज्ज एव्व किळ से णक्खत्तं। अज्ज एव्व कोदुअमंगळं कादव्वं त्ति अह्माणं भट्टिणी भ

[ *Entering* ]

*Nurse*—Victory to the princess. Oh princess ! ou are given in marriage.

*Vasava.*—Madam, to whom ?

*Nurse*—To Uadayana, the king of the Vatsas.

*Vasava.*—Is that king alright ?

*Nurse.*—He arrived safe, and he accepted the rincess.

*Vasava.*—It is a venture.

*Nurse.*—What venture is here ?

*Vasava.*—Nothing really. I thought he would e now indifferent after having grieved to that xtent.

*Nurse*—Madam, the minds of great men recor their balance easily, and have the future foreost (in view).

*Vasava.*—Madam, did he himself make the emand ?

*Nurse.*—No, no, our Maharājā himself offered er hand, taking into consideration his noble birth, arning, age and beauty, while he is here on me other business.

*Vasava.*—( *To herself* ) I see. Then my lord not now at fault.

( *Enters another companion* ).

[ त्वरतां त्वरतां तावदार्या । अद्यैव किल शोभनं नक्षत्रम् । अद्यैव कौ
कमंगलं कर्तव्यमित्यस्माकं भट्टिनी भणति ]

**वासवदत्ता**—( आत्मगतम् ) जह जह तुवरदि, तह तह अं
करेदि मे हिअअं । [ यथा यथा त्वरते, तथा तथांधीकरोति मे हृदयम् ]

**धात्री**—एदु एदु भट्टिदारिआ । [ एत्वेतु भर्तृदारिका ]

( निष्क्रांताः सर्वे ) इति द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

( ततः प्रविशति विचिंतयंती वासवदत्ता )

**वासवदत्ता**—विवाहामोदसंकुळे अंतेउरचउस्साळे परित्तजि
पदुमावदिं इह आअदह्मि पमदवणं । जाव दाणिं भाअधेअणिव्वुत्तं दु
विणोदेमि । ( परिक्रम्य ) अहो अच्चाहिदं । अय्यउत्तो वि णाम पर
रओ संवुत्तो । जाव उवविसामि । ( उपविश्य ) धञ्ञा खु चक्कवाअ
जा अण्णोण्णविरहिदा ण जीवइ । ण खु अहं पाणाणि परित्तजामि
अय्यउत्तं पेक्खामि त्ति एदिणा मणोरहेण जीवामि मंदभाआ । [ विवा
मोदसंकुले अंतःपुरचतुश्शाले परित्यज्य पद्मावतीमिहागतास्मि प्रमदवन
यावदिदानीं भागधेयनिर्वृत्तं दुःखं विनोदयामि । (परिक्रम्य) अहो अत्या
तम् । आर्यपुत्रोऽपि नाम परकीयः संवृत्तः यावत् उपविशामि । (उपविश्
धन्या खलु चक्रवाकवधूः यान्योन्यविरहिता न जीवति । न खल्वहं प्राण
परित्यजामि । आर्यपुत्रं पश्यामीति एतेन मनोरथेन जीवामि मंदभागा ]

( ततः प्रविशति पुष्पाणि गृहीत्वा चेटी )

**चेटी**—काहिंणुखु गदा अय्या आवन्तिआ । ( परिक्रम्यावलोक्य
अम्मो इअ चिंतासुञ्ञहिअआ णीहारपडिहदचन्दळेहा विअ अमाण्डिद
दअं वेसं धारअन्दी पिअंगुसिळापट्टए उवविट्ठा । जाव उपसप्पामि

*Com.*—Make haste, make haste, madam. To-ay is the auspicious day ( lit: constellation ). Our ueen says that to-day must be performed the eremony 'kautakamangala.'

*Vasava* —( *To herself* ) As she makes haste, he makes my mind vacant.

*Nurse*—May the princess come.

[ *Exeunt all.*

*Ends the second Act.*

——o——

## Act III.

( *Then enters Vāsavadattā in a thinking mood* ).

*Vasava.*—I have come to the pleasure garden ere, leaving Padmávati in the square of the harem hich is filled with joy due to (Padmávati's) mar-iage. I shall just try to lighten the affliction brought on by fate. ( *Walking* ) Oh! A grea vrong! My lord also has now become a stranger to ne. I shall just sit down. ( *Sitting* ) Blessed is the emale Chakravâka that does not survive after mue ual separation. Indead I shall not give up my life. , the unfortunate, shall continue to live, with the, lesire to see my lord.

( *Then enters companion with flowers in hands* ).

( उपसृत्य ) अय्ये ! आवंतिए ! को काळो, तुमं अण्णेसामि [ क
गता आर्यावंतिका । ( परिक्रम्यावलोक्य ) अम्मो इयं चिंताशून्य
नीहारप्रतिहतचंद्रलेखेवामंडितभद्रकं वेषं धारयन्ती प्रियंगुशिला
उपविष्टा । यावदुपसर्पामि । आर्ये! आवंतिके ! कः कालः, त्वामन्विष्या

**वासवदत्ता**—किण्णिमित्तं [ किन्निमित्तम् ]

**चेटी**—अह्माअं भट्टिणी भणादि–महाकुळप्पसूदा सिणिद्धा णि
त्ति इमं दाव कोदुअमाळिअं गुह्मदु अय्या [अस्माकं भर्त्री भण
महाकूलप्रसूता स्निग्धा निपुणेति इमां तावत् कौतुकमालिकां गुंफत्वाय

**वासवदत्ता**—अह कस्स किळ गुह्मिदव्वं [ अथ कस्मै
गुंफितव्यम् ]

**चेटी**—अह्माअं भट्टिदारिआए । [ अस्माकं भर्तृदारिकायै ]

**वासवदत्ता**—( आत्मगतम् ) एदं पि मए कत्तव्वं आसी ।
अकरुणा खु इस्सरा । [ एतदपि मया कर्तव्यमासीत् । अहो अकरु
खल्वीश्वराः ]

**चेटी**—अय्ये ! मा दाणिं अञ्ञं चिंतिअ । एसो जामादुओ
भूमीए ह्णाअदि । सिग्घं दाव गुह्मदु अय्या। (आर्ये, मेदानीमन्यच्चिंतयि
एष जामाता मणिभूम्यां स्नायति । शीघ्रं तावत् गुंफत्वार्या ]

**वासवदत्ता**—( आत्मगतम् )ण सक्कणोमि अण्णं चिंतेदु (प्रका
हळा ! किं दिट्ठो जामादुओ । [ न शक्नोम्यन्यच्चिंतयितुम् । हला !
दृष्टो जामाता ]

**चेटी**—आम दिट्ठो भट्टिदारिआए सिणेहेण अह्माअं कोदूहळेण
[ आं दृष्टो भर्तृदारिकायाः स्नेहेनास्माकं कौतूहलेन च ]

**वासवदत्ता**—कीदिसो जामादुओ । [कीदृशो जामाता ]

**चेटी**—अय्ये, भणामि दाव, ण ईरिसो दिट्ठपुरुवो । [ आर्ये भण
तावत् नेदृशो दृष्टपूर्वः ]

*Com.*—Where is madam Avantika gone? (*Walking round and seeing her* ) Oh! she is sitting on a slab underneath the Priyangu tree with her mind vacant because of anxiety, and with befitting garments though without ornaments, like the streak of the moon that is obscured by fog. I shall just approach her. ( *Approaching* ) Madam Avantika, how long have I been looking out for you ?

*Vasava.*—Why for ?

*Com* --Our queen says--"May her ladyship wreathe this Kautakamálá, as she is born of a great family, is affectionate and skilful."

*Vasava.*--Now, for whom is this to be wreathed ?

*Com.*--For our princess.

*Vasava.*--( *To herself* ) This also has to be done by me ! Oh ! Indeed, how cruel are the gods!

*Com.*--Madam, do not be thinking of any thing else now. Here the son-in-law is having his bath in the jewelled apartment. You should finish it soon.

*Vasava.*--( *To herself* ) I cannot think of anything else. ( *Openly* ) Dear one, did you have a look at the son-in-law ?

*Com.*--Yes, we saw him, because of our attachment to the princess and of our curiosity.

*Vasava.*--How is the son-in-law ?

*Com.*--Madam, I really say, I have never seen his like before.

**वासवदत्ता**--हळा ! भणाहि भणाहि, किं दंसणीओ [ ह भण भण, किं दर्शनीयः ]

**चेटी**- सअं खु भअवं सरचावहीणो कामदेवो त्ति । [ स्वयं भगवान् शरचापहीन: कामदेव इति ]

**वासवदत्ता**—होदु एत्तअं । [ भवत्वेतावत् ]

**चेटी**—किण्णिमित्तं वारेसि । [ किन्निमित्तं वारयासि ]

**वासवदत्ता**—अजुत्तं परपुरुससंकित्तणं सोदुं । [ अयुक्तं परपु संकीर्तनं श्रोतुम् ]

**चेटी**--तेण हि गुह्मदु अय्या सिग्घं । [तेन हि गुंफत्वार्या शीघ्र

**वासवदत्ता**--आणेहि । ( आत्मगतम् ) इअं गुह्मामि मंदभा ( वर्जयित्वा विलोक्य ) इमं दाव ओसहं किं णाम । [ आनय । ( आ गतम् ) इयं गुंफामि मंदभागा । ( वर्जयित्वा विलोक्य ) इदं तावद किं नाम ]

**चेटी**—अविहवाकरणं णाम । [ अविधवाकरणं नाम ]

**वासवदत्ता**—( आत्मगतम् ) इदं बहुसो गुह्मिदव्वं मम अ मावदीए अ । ( प्रकाशम् ) इमं दाव ओसहं किं णाम [(आत्मग इदं बहुशो गुंफितव्यं मम च पद्मावत्याश्च । ( प्रकाशम् ) इदं तावद किं नाम ]

**चेटी**--सवत्तिमद्दणं णाम । [ सपत्नीमर्दनं नाम ]

**वासवदत्ता**--इदं ण गुह्मिदव्वं । [ इदं न गुंफितव्यम् ]

**चेटी**--कीस । [ कस्मात् ]

**वासवदत्ता**—उवरदा तस्स भय्या, तं णिप्पओअणं त्ति । [ रता तस्य भार्या, तन्निष्प्रयोजनमिति ]

( प्रविश्यापरा )

राजा—वयस्य ! न खलु नाभिप्रेतैषा कथा । किंतु,

स्मराम्यवंत्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः
बाष्पं प्रवृद्धं नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥५॥

अपि च,

बहुशोऽप्युपदेशेषु यया मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥६॥

विदूषकः—भोदु, अण्णं कहइस्सं । अत्थि णअरं ब्रह्मदत्तं णाम । तहिं किळ राआ कंपिळ्ळो णाम । [ भवतु, अन्यां कथयिष्यामि । अस्ति नगरं ब्रह्मदत्तं नाम । तत्र किल राजा कांपिल्यो नाम]

राजा—किमिति किमिति ।

विदूषकः—(पुनस्तदेव पठति )

राजा—मूर्ख! राजा ब्रह्मदत्तः, नगरं काम्पिल्यमित्यभिधीयताम् ।

विदूषकः—किं राआ ब्रह्मदत्तो, णअरं कंपिळ्ळं । [ किं राजा ब्रह्मदत्तः, नगरं कांपिल्यम् ]

राजा—एवमेतत् ।

विदूषकः—तेण हि मुहुत्तअं पडिवाळेदु भवं, जाव ओट्ठगअं करिस्सं । राआ ब्रह्मदत्तो, णअरं कंपिळ्ळं । (इति बहुशस्तदेव पठित्वा) इदाणिं सुणादु भवं । अयि सुत्तो अत्तभवं । अदिसीदळा इअं वेळा । अत्तणो पावरअं गह्णिअ आअमिस्सं । (निष्क्रान्तः) [तेन हि मुहूर्तकं प्रतिपालयतु भवान्, यावदोष्ठगतं करिष्यामि । राजा ब्रह्मदत्तः, नगरं कांपिल्यम् (इति बहुशस्तदेव पठित्वा) इदानीं शृणोतु भवान् । अयि सुप्तोऽत्रभवान् । अतिशीतलेयं वेला । आत्मनः प्रावरकं गृहीत्वागामिष्यामि] (निष्क्रांतः)

*King*—Friend, indeed, not that I do not like this story; but,

I am put in mind of the daughter of the king of Avanti, who at the time of departure, remembering her relatives, shed, copious tears, that clung to the corners of her eyes, on my chest through affection. 5.

And also,

frequeutly, while being taught, she, looking at me, beat the air with her hands, putting aside the fiddle stick. 6.

*Vidu*.—Let us put it aside. I shall tell another. There was a city by name Brahmadatta. There lived a king by name Kampilya.

*King*—What ? What ?

*Vidu.*—( *Repeats the same* ).

*King*—Fool ! Say 'king Brahmadatta' and 'city Kampilya.'

*Vidu.*—What ? 'king Brahmadatta' and 'city Kampilya' ?

*King*—Yes, in that way.

*Vidu*.—Then wait for a while till I commit it to memory. "King Brahmadatta and city Kampilya." (*Thus repeating the same several times*) Now you hear. Oh ! My lord sleeps ! This time is very cool. I shall bring my covering.

[*Exit.*

(ततः प्रविशति वासवदत्ता आवन्तिकावेषेण, चेटी च)

**चेटी**—एदु एदु अय्या । दिढं खु भट्टिदारिआ सीसवेदणाए दुक्खाविदा । [एत्वेत्वार्या । दृढं खलु भर्तृदारिका शीर्षवेदनया दुःखिता]

**वासवदत्ता**—हद्धि, कहिं सअणीअं रइदं पदुमावदीए । [कुत्र शयनीयं रचितं पद्मावत्याः]

**चेटी**—समुद्दगिहके किळ सेज्जात्थिण्णा । [समुद्रगृहके किल शय्यास्तीर्णा]

**वासवदत्ता**—तेण हि अग्गदो याहि । [तेन ह्यग्रतो याहि]

(उभे परिक्रामतः)

**चेटी**—इदं समुद्दगिहकं । पविसदु अय्या । जाव अहं वि सीसाणुळेवणं तुवारेमि (निष्क्रांता) [इदं समुद्रगृहकम् । प्रविशत्वार्या । यावदहमपि शीर्षानुलेपनं त्वरयामि ]

**वासवदत्ता**—अहो अकरुणा खु इस्सरा मे । विरहपय्युस्सुअस्स अय्यउत्तस्स विस्समत्थाणभूदा इअं पि णाम पदुमावदी अस्सत्था जादा । जाव पविसामि । (प्रविश्यावलोक्य) अहो परिजणस्स पमादो । अस्सत्थं पदुमावदिं केवळं दीवसहाअं करिअ परित्तजादि । इअं पदुमावदी ओसुत्ता । जाव उवविसामि । अहवा अञ्ञासणपरिग्गहेण अप्पो विअ सिणेहो पडिभादि । ता इमास्सिं सय्याए उवविसामि (उपविश्य) किंणुहु एदाए सह उववसन्तीए अज्ज पह्ळादिदं विअ मे हिअअं । दिट्ठिआ अविच्छिण्णसुहणिस्सासा । णिव्वुत्तरोआए होदव्वं । अहव एअदेससंविभाअदाए सअणीअस्स सूएदि मं आलिंगेहि त्ति । जाव सइस्सं । (शयनं नाटयति) [ अहो अकरुणाः खल्वीश्वरा मे । विरहपर्युत्सुकस्यार्यपुत्रस्य विश्रमस्थानभूतयमपि नाम पद्मावत्यस्वस्था जाता । यावत् प्रविशामि । (प्रविश्यावलोक्य) अहो परिजनस्य प्रमादः । अस्वस्थां पद्मावतीं केवलं दीपसहायां कृत्वा परित्यजति । इयं पद्मावत्यवसुप्ता । यावदुपविशामि । अथवान्यासनपरिग्रहेणाल्प

(*Then enter Vāsavadattā in Avanti-dress and the companion*).

*Com.*—Come, come, madam. Indeed, the princess is greatly suffering from head-ache.

*Vāsava.*—Where is the bed for Padmāvati arranged ?

*Com.*—The bed is arranged in the sea-palace.

*Vāsava.*—Then lead the way.

( *Both walk around* ).

*Com.*—This is the sea-palace. May madam enter, while I hasten to bring ointment for the head. [ *Exit.*

*Vasava.*—Oh ! Indeed gods are hard-hearted to me ! This Padmavati also, who is the resting place of my lord who is uneasy on account of separation (from me), has become unwell ! I shall just enter. (*Entering and looking*) Oh ! The fault of the attendants ! They have left Padmavati in her illness only with a lamp ! This is Padmavati in sleep. I shall just sit. Or, if, I take a separate seat, my attachment would appear as if slight. Therefore, I shall sit on this bed.

इव स्नेहः प्रतिभाति। तदस्यां शय्यायामुपविशामि। (उपविश्य) किंनुखल्वे-तया सहोपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम्। दिष्ट्याविच्छिन्नसुख-निःश्वासा। निवृत्तरोगया भवितव्यम्। अथवैकदेशसंविभागतया शयनीयस्य सूचयति मामालिंगेति। यावच्छयिष्ये। (शयनं नाटयति)

**राजा**— (स्वप्नायते) हा वासवदत्ते !

**वासवदत्ता**—(सहसोत्थाय) हं अय्यउत्तो, ण हु पदुमावदी। किंणुखु दिट्ठह्मि। महन्तो खु अय्यजोअन्धराअणस्स पडिण्णाहारो मम दंसणेण णिप्फळो संवुत्तो। [हम् आर्यपुत्रः, न खलु पद्मावती। किन्तुखलु दृष्टास्मि। महान् खल्वार्ययौगंधरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः। ]

**राजा**—हा अवंतिराजपुत्रि !

**वासवदत्ता**—दिट्ठिआ सिविणाअदि खु अय्यउत्ते। ण एत्थ कोवि जणो। जाव मुहुत्तअं चिट्ठिअ दिट्ठिं हिअअंच तोसेमि। [दिष्ट्या स्वप्नायते खल्वार्यपुत्रः। नात्र कश्चिज्जनः। यावन्मुहूर्तकं स्थित्वा दृष्टिं हृदयं च तोषयामि ]

**राजा**—हा प्रिये! हा प्रियाशिष्ये! देहि मे प्रतिवचनम्।

**वासवदत्ता**—आळवामि भट्टा! आळवामि। [ आलपामि भर्तः आलपामि ]

**राजा**—किं कुपितासि।

**वासवदत्ता**—णहि णहि, दुक्खिदह्मि। [नहि नहि, दुःखितास्मि]

**राजा**—यद्यकुपिता, किमर्थं नालंकृतासि।

**वासवदत्ता**—इदो वरं किं। [इतः परं किम्]

**राजा**—किं विरचिकां स्मरसि।

**वासवदत्ता**—(सरोषम्) आ अवेहि, इहावि विरहिआ। [आ अपेहि, इहापि विरचिका]

(*Sitting*) How indeed is my mind now delighted while sitting by her? Fortunalely, she breathes easily and without break. Possibly she has got over her illness. Or, by my partaking of the bed she suggests to me "Embrace me." I shall just lie down. (*Gesticulates sleeping*).

*King*—(*Dreams*) O Vasavadatta!

*Vasava.*—(*Getting up at once*) Oh! My lord, not Padmavati! Is it possible that I am seen? The great weight of the vow of revered Yaugandharayana is indeed made fruitless by my being seen.

*King*—O daughtor of the king of Avanti!

*Vasava.*—Fortunately my lord is dreaming. There is no one here. Meanwhile I shall stay a while and please my eyes and mind.

*King*—O beloved one! O dear pupil! Speak o me (in return to my words).

*Vasava.*—I speak my lord, I speak.

*King*—Are you angry?

*Vasava.*—No, no. I am unhappy.

*King*—If you are not angry, why have you not put on ornaments?

*Vasava.*—What, after this?

*King*—Are you reminded of Virachika?

*Vasava.*—(*Angrily*) Ah! Away with it. Here also Virachika?

**राजा**—तेन हि विरचिकार्थं भवतीं प्रसादयामि । (हस्तौ प्रसारयति)

**वासवदत्ता**--चिरं ठिदह्मि । को वि मं पेक्खे । ता गमिस्सं। अहव, सय्यावळम्बिअं अय्यउतस्स हत्थं सअणीए आरोविअ गमिस्सं। (तथा कृत्वा निष्क्रान्ता) [चिरं स्थितास्मि । कोऽपि मां पश्येत् । तद् गमिष्यामि । अथवा, शय्यावलम्बितमार्यपुत्रस्य हस्तं शयनीय आरोप्य गमिष्यामि ] ( तथा कृत्वा निष्क्रांता )

**राजा**---( सहसोत्थाय ) वासवदत्ते ! तिष्ठ तिष्ठ । हा धिक्

**निष्क्रामन् संभ्रमेणाहं द्वारपक्षेण ताडितः ।**
**ततो व्यक्तं न जानामि भूतार्थोऽयं मनोरथः ॥७॥**

(प्रविश्य)

**विदूषकः**—अइ पडिबुद्धो अत्तभवं । [ अयि प्रतिबुद्धोऽत्रभवान् ]

**राजा**--वयस्य ! प्रियमावेदये, धरते खलु वासवदत्ता ।

**विदूषकः** —अविहा वासवदत्ता । कहिं वासवदत्ता। चिरा खु उवरदा वासवदत्ता । [अविहा वासवदत्ता । कुत्र वासवदत्ता । चिरात् खलूपरता वासवदत्ता]

**राजा** --वयस्य ! मा मैवं,

**शय्यायामवसुप्तं मां बोधयित्वा सखे गता ।**
**दग्धेति ब्रुवता पूर्वं वंचितोऽस्मि रुमण्वता ॥८॥**

**विदूषकः**—अविहा असंभावणीअं एदं ण । आ उदअह्लाणसंकित्तणेण तत्तहोदिं चिन्तअन्तेण सा सिविणे दिट्ठा भवे । [अविहा असंभावनीयमेतन्न । आ उदकस्नानसंकीर्तनेन तत्रभवतीं चिन्तयता सा स्वप्ने दृष्टा भवेत् ]

**राजा**—

**यदि तावदयं स्वप्नो धन्यमप्रतिबोधनम् ।**
**अथायं विभ्रमो वा स्याद्विभ्रमो ह्यस्तु मे चिरम् ॥९॥**

*King*—Then, because of Virachika, I inplore you. (*Stretches arms*).

*Vasava.*--I have stayed long. Some one may see me. Therefore I shall go. Or, I shall place on the bed the hands of my lord that are now out of bed, and then go. [*Doing so, exit*.

*King*--( *Getting up suddenly* ) Vasavadatta, stop, stop. Alas !

When going out in haste, I struck myself against the side of the door; therefore, I do not know clearly if my desire is a reality. 7.

( *Entering* )

*Vidu.*--Oh ! My lord is awake !

*King*--Friend, I tell you a happy news. Really, Vāsavadattā is alive.

*Vidu.*--Alas ! Vasavadatta ! Where is Vasavadatta ? Vasavadatta is dead long ago.

*King*--Friend, no no.

Friend, she went awakening me who was sleeping on the bed. I was formerly deceived by Rumanvan, when he said she was burnt. 8.

*Vidu.*--Ah ! This is not impossible. May be, she was seen by you in a dream, as you were thinking of her, because of the story of the baths.

*King*--

If indeed this is a dream, it is a blessing to be not awakened. Or, if this may be a fantasy, then let there ever be (such) a fantasy. 9.

**विदूषकः**—मा दाणिं भवं अत्ताणं ओहासिअं कादुं । किन्तु इमास्सिं राअउळे अवान्तिसुन्दरी णाम जक्खिणी पडिवसदि । सा तुए दिट्ठा भवे । [ मेदानीं भवानात्मानमवहसितं कर्तुम् । किन्त्वास्मिन् राजकुलेऽवान्तिसुंदरी नाम यक्षिणी प्रतिवसति । सा त्वया दृष्टा भवेत् ]

**राजा**—न न,

**स्वप्नस्यांते विबुद्धेन नेत्रविप्रोषिताञ्जनम् ।**
**चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥१०॥**

अपि च वयस्य । पश्य पश्य,

**योऽयं संत्रस्तया देव्या तया बाहुर्निपीडितः ।**
**स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुंचति ॥११॥**

**विदूषकः**—मा दाणिं भवं अणत्थं चिन्तिअ । एदु एदु भवं । चउस्साळं पविसामो । [मिदानीं भवाननर्थं चिंतयित्वा । एत्वेतु भवान् । चतुःशालं प्रविशावः ]

( प्रविश्य )

**कांचुकीयः**—जयत्वार्यपुत्रः । अस्माकं महाराजो दर्शको भवन्तमाह–एष खलु भवतोऽमात्यो रुमण्वान् महता बलसमुदयेनोपयातः खल्वारुणिमभिघातयितुम् । तथा हस्त्यश्वरथपदातीनि मामकानि विजयांगानि सन्नद्धानि । तदुत्तिष्ठतु भवान् । अपि च,

**भिन्नास्ते रिपवो भवद्गुणरताः पौराः समाश्वासिताः**
**पार्ष्णी यापि भवत्प्रयाणसमये तस्या विधानं कृतम् ।**
**यद्यत् साध्यमरिप्रमाथजननं तत्तन्मयानुष्ठितं**
**तीर्णा चापि बलैर्नदी त्रिपथगा वत्साश्च हस्ते तव ॥१२॥**

*Vidu.*--Now, do not make yourself ridiculous. But in this palace, there is staying a Yakshini called Avanti-sundari; you may have seen her.

*King*--No, no;

I, wide awake, at the end of the dream, saw the face, with long curls, and with eyes devoid of ointment, of her who is (not only living but also) guarding her chastity. 10.

And also, friend, look here!

This arm, which was tightly held by that perturbed queen, does not cease to be horripilated, being brought into touch (with her), though in a dream. 11.

*Vidu.*--Do not now think of useless things. Come along, come along. Let us enter the square.

( *Entering* )

*Chamberlain*--Victory to our lord. Our King Darshaka says to you— "Here comes Rumanvan, your minister, with a large army to vanquish Aruni. Also, my means of success are ready—elephants, horses, chariots and infantry. You may, therefore, get up. And also,

those enemies are defeated, and people who are attached to you because of your virtues have regained confidence; arrangements are made for (guarding) the rear, at the time of your departure. I have done everything that is necessary to be done, and that will lead to the destruction of the enemy. The river Ganges has been, as it were, crossed by your forces and the country Vatsa has come into your hands. 12.

राजा—( उत्थाय ) बाढम् । अयमिदानीं,

**उपेत्य नागेंद्रतुरंगतीर्णे**
**तमारुणिं दारुणकर्मदक्षम्**
**विकीर्णबाणोग्रतरंगभंगे**
**महार्णवाभे युधि नाशयामि ॥ १३ ॥**

(निष्क्रांताः सर्वे) इति पंचमोऽङ्कः ॥

---

## अथ षष्ठोऽङ्कः ।

—:o:—

(ततः प्रविशति कांचुकीयः)

**कांचुकीयः**—क इह भोः ! रत्नतोरणद्वारमशून्यं कुरुते ।

(प्रविश्य)

**प्रतीहारी**—अय्य ! अहं विजआ । किं कराअदु । [आर्य ! अहं विजया । किं क्रियताम्]

**कांचुकीयः**—भवति ! निवेद्यतां निवेद्यतां वत्सराज्यलाभप्रवृद्धोदयायोदयनाय—एष खलु महासेनस्य सकाशाद्रैभ्यसगोत्रः कांचुकीयः प्राप्तः, तत्रभवत्या चांगारवत्या प्रेषितार्या वसुंधरा नाम वासवदत्ताधात्री च प्रतीहारमुपस्थिता्विति ।

**प्रतीहारी**—अय्य ! अदेसकाळो पडिहारस्स । [ आर्य ! अदेशकालः प्रतीहारस्य ]

**कांचुकीयः**—कथमदेशकालो नाम ।

**प्रतीहारी**—सुणादु अय्यो । अज्ज भट्टिणो सय्यामहाप्पासादगदेण केण वि वीणा वादिदा । तं च सुणिअ भट्टिणा भणिअं घोसवदीए सद्दो विअ सुणीअदि त्ति । [ श्रृणोत्वार्यः । अद्य भर्तुः शय्यामहाप्रासादगतेन केनापि वीणा वादिता । तां च श्रुत्वा भर्त्रा भणितं—घोषवत्याः शब्द इव श्रूयत इति । ]

*King*—(*Getting up*) Now I,
shall go and vanquish in war, that Aruni (always) ready to perpetrate cruel de ds, just like an ocean, which I shall cross by means of elephants and horses, and wherein the scattered arrows will appear like high waves broken (midway). 3.

[ *Exeunt all.*

*Ends the fifth Act.*

---

## Act VI.

( *Then enters the chamberlain* ).

*Cham.*—Oh, who is here guarding the door with jewelled arch?

( *Entering* )

*Prati.*--Sir, (here) I am Vijaya. What is to be done?

*Cham.*—Lady, tell Udayana, whose rise is brought about by the acquisition of the kingdom of Vatsa, "Here have arrived from Mahasena, the chambertain of Raibhyasa Gotra and Vasavadatta's nurse by name Vasundhara sent by queen Angaravati; and they are waiting at the door."

*Prati.*--Sir, this is not the time nor the place for receiving guests.

*Cham.*--Why is this not the time nor the place?

*Prati.*--Hear, Sir. To-day, some one in the sleeping apartment of the palace played on Vina. Hearing it, my lord said, "The sound like that of Ghoshavati is heard I think."

**कांचुकीयः**—ततस्ततः ।

**प्रतीहारी**—तदो तहिं गच्छिअ पुच्छिदो— कुदो इमाए वीणाए आगमो त्ति । तेण भणिअ—अह्मेहिं णम्मदातीरे कोच्चगुम्मलग्गा दिट्ठा । जइ प्पओअणं इमाए उवणीअदु भट्टिणोत्ति । तं च उवणीदं अंके करिअ मोहं गदो भट्टा । तदो मोहप्पच्चागदेण बप्फपय्याउलेण मुहेण भट्टिणा भणिअं दिट्ठासि घोसवदि! सा हु ण दिस्सदि त्ति । अय्य! ईदिसो अणवसरो । कहं णिवेदेमि । [ततस्तत्र गत्वा पृष्टः— कुतोऽस्या वीणाया आगम इति । तेन भणितं— अस्माभिर्नर्मदातीरे कूर्चगुल्मलग्ना दृष्टा । यदि प्रयोजनमनया, उपनीयतां भर्त्रेति । तां चोपनीतामंके कृत्वा मोहं गतो भर्ता । ततो मोहप्रत्यागतेन बाष्पपर्याकुलेन मुखेन भर्त्रा भणितं— दृष्टासि घोषवति! सा खलु न दृश्यत इति । आर्य! ईदृशोऽनवसरः । कथं निवेदयामि]

**कांचुकीयः**—भवति! निवेद्यताम् । इदमपि तदाश्रयमेव ।

**प्रतीहारी**—अय्य! इअं णिवेदेमि । एसो भट्टा सय्यामहप्पासादादो ओदरइ । ता इह एव्व णिवेदइस्सं । [आर्य! इयं निवेदयामि । एष भर्ता शय्यामहाप्रासादादवतरति । तदिहैव निवेदयिष्यामि]

**कांचुकीयः**—भवति! तथा ।

(उभौ निष्क्रान्तौ) **मिश्रविष्कंभकः।**

---

(ततः प्रविशति राजा विदूषकश्च)

**राजा**—

**श्रुतिसुखानिनदे ! कथं नु देव्याः ।**
**स्तनयुगले जघनस्थले च सुप्ता ।**
**विहगगणरजोविकीर्णदंडा—**
**प्रतिभयमध्युषितास्यरण्यावसम् ॥१॥**

*Cham.*—Then, then?

*Prati.*—Then the player of the Vina was asked by my lord going there, "Whence has this Vinā come here?" He replied, "We found it mingled with a cluster of Darbhas on the banks of the Narmada. My lord can take it, if it is wanted." My lord took it and placing it on (his) lap, swooned. After recovering from the swoon, with his face perturbed by tears, my lord said, "Ghoshavati, I have seen you; but she is not to be seen." Sir, hence this is no time. How shall I inform him?

*Cham.*—Lady, you may inform him; this also is in connection with it

*Prati.*--Here I inform (him). Here is my lord coming down from the sleep-palace. So, here I shall tell him.

*Cham.*--Do so, lady. [*Exeunt both.*

*Ends the mixed Vishkambhaka.*

---

*King*--
(You) whose notes were charming to hear, and who rested on the pair of breasts and thighs of the Queen, how did you, without fear, resort to forest, with your handle covered with dust scattered by birds? 1.

अपि च, आस्निग्धासि घोषवति! या तपस्विन्या न स्मरसि,

**श्रोणीसमुद्वहनपार्श्वनिपीडितानि**
**खेदस्तनान्तरसुखान्युपगूहितानि ।**
**उद्दिश्य मां च विरहे परिदेवितानि**
**वाद्यान्तरेषु कथितानि च सस्मितानि ॥ २ ॥**

**विदूषकः**—अळं दाणिं भवं अदिमत्त सन्ताप्पिअ । [ अलमिदानीं भवानातिमात्रं संतप्य ]

**राजा**—वयस्य ! मा मैवं,

**चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः ।**
**तां तु देवीं न पश्यामि यस्या घोषवती प्रिया ॥ ३ ॥**

वसंतक ! शिल्पिजनसकाशान्नवयोगां घोषवतीं कृत्वा शीघ्रमानय ।

**विदूषकः**—जं भवं आणवेदि । ( वीणां गृहीत्वा निष्क्रान्तः - [ यद् भवानाज्ञापयति ]

( प्रविश्य )

**प्रतीहारी**—जेदु भट्टा । एसो खु महासेणस्स सआसादो रब्भसगोत्तो कञ्चुईओ देवीए अंगारवदीए पेसिदा अय्या वसुन्धरा णाम वासवदत्ताधत्ती अ पाडिहारं उवट्ठिदा । [ जयतु भर्ता । एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः कांचुकीयो देव्याऽङ्गारवत्या प्रेषितार्या वसुंधरा नाम वासवदत्ताधात्री च प्रतिहारमुपस्थितौ ]

**राजा**—तेन हि पद्मावती तावदाहूयताम् ।

**प्रतीहारी**—जं भट्टा आणवेदि । ( निष्क्रांता ) [ यद्भर्ताज्ञापयति ]

**राजा**—किंनुखलु शीघ्रमिदानीमयं वृत्तान्तो महासेनेन विदितः ।

( ततः प्रविशति पद्मावती प्रतीहारी च )

**प्रतीहारी**—एदु एदु भट्टिदारिआ [ एत्वेतु भर्तृदारका ]

**पद्मावती**—जेदु अय्यउत्तो । [ जयत्वार्यपुत्रः ]

And also, O Ghoshavati, you are heartless, because you do not remember of the poor Queen,

your lower part being closely brought into contact by your resting on her thighs, your being pleasantly pressed against breasts after fatigue, and her wailings, during separation, about me, and her playing, with a smile, on other instruments. 2.

*Vidu.*--Do not now make yourself greatly vexed, friend.

*King*--Do not say so; do not say so.

My passion, long dormant, is awakened by the Vinā; but I do not see that Queen to whom Ghoshavati was dear. 3.

Vasantaka, have Ghoshavati repaired at once by an artist.

*Vidu.*—As you command.

[*Exit taking the Vinā.*

(*Entering*)

*Prati.*--Victory to my lord. Here are the Chamberlain of Raibhyasa Gotra from Mahāsena, and lady Vasundharā Vāsavadatta's nurse, sent by Queen Angāravati, waiting at the door.

*King*--Then call in Padmāvati.

*Prati.*--As my lord commands. [*Exit.*

*King*--May it be that Mahāsena, has so soon come to know of this event?

(*Then enter Padmāvati and Pratihāri*).

*Prati.*--Come, come, Princess.

*Padmā.*--Victory to my lord.

**राजा**—पद्मावति ! किं श्रुतं महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयः प्राप्तस्तत्रभवत्या चाङ्गारवत्या प्रेषिताऽऽर्या वसुंधरा नाम वासवदत्ताधात्री च प्रतिहारमुपस्थिताविति ।

**पद्मावती**—अय्यउत्त ! पिअं मे ञादिकुळस्स कुसळवुत्तन्तं सोदुं । [ आर्यपुत्र ! प्रियं मे ज्ञातिकुलस्य कुशलवृत्तान्तं श्रोतुम् ]

**राजा**—अनुरूपमेतद्भवत्याभिहितं–वासवदत्तास्वजनो मे स्वजन इति । पद्मावति ! आस्यताम् । किमिदानीं नास्यते ।

**पद्मावती**—अय्यउत्त ! किं मए सह उवविट्ठो एदं जणं पेक्खिस्सदि । [ आर्यपुत्र ! किं मया सहोपविष्ट एतं जनं प्रेक्षिष्यते ]

**राजा**—कोऽत्र दोषः ।

**पद्मावती**—अय्यउत्तस्स अवरो परिग्गहो त्ति उदासीणं विअ होदि । [आर्यपुत्रस्यापरः परिग्रह इति उदासीनमिव भवति]

**राजा**—कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरतीति बहुदोषमुत्पादयति । तस्मादास्यताम् ।

**पद्मावती**—जं अय्यउत्तो आणवेदि ( उपविश्य ) अय्यउत्त तादो वा अंबा वा किंणुखु भणिस्सदि त्ति आविग्गा विअ संवुत्ता । [यदार्यपुत्र आज्ञापयति । आर्यपुत्र ! तातो वाम्बा वा किन्नु खलु भणिष्यतीत्याविग्नेव संवृत्ता]

**राजा**—पद्मावति ! एवमेतत् ।

**किं वक्ष्यतीति हृदयं परिशंकितं मे**
**कन्या मयाप्यपहृता न च रक्षिता सा ।**
**भाग्यैश्चलैर्महदवाप्तगुणोपघातः**
**पुत्रः पितुर्जनितरोष इवास्मि भीतः ॥४॥**

*King*--Padmavati, have you heard that the Chamberlain of Raibhyasa Gotra from Mahasena and lady Vasundhara, Vasavadatta's nurse sent by Queen Angarvati, have come and are waiting at the door ?

*Padma.*--My lord, I am (always) glad to hear about the welfare of my relatives.

*King*--You have well said that the relatives of Vasavadatta are your relatives. Padmavati, take your seat. Why do you not sit ?

*Padma.*--My lord, will you receive these people with me sitting by ?

*King*--What harm is there ?

*Padmā*--They would feel awkward as I am my lord's second wife.

*King*--It will be a great mistake if I do not allow people having a right to see my (second) wife to do so. Therefore you may sit.

*Padma.*--As my lord commands. (*Sitting*) My lord, I feel uneasy about what would father and mother say.

*King*--Padmāvati, it is so.

My mind has misgivings as to what (the guests) will say. I took away the daughter and failed to protect her. Through fickle fate, I, having done an act of disrespect towards the elders, am very much afraid as a son is of his father when the father is angry. 4.

**पद्मावती**—ण किं सक्कं रक्खिदुं पत्तकाळे [ न किं शक्यं रक्षितुं प्राप्तकाले ]

**प्रतीहारी**—एसो कञ्चुईओ धत्ती अ पडिहारं उवट्ठिदा। [एष कांचुकीयो धात्री च प्रतीहारमुपस्थितौ]

**राजा**—शीघ्रं प्रवेश्यताम् ।

**प्रतीहारी**—जं भट्टा आणवेदि । ( निष्क्रान्ता ) [यद्भर्ताज्ञापयति]

( ततः प्रविशति कांचुकीयो धात्री प्रतीहारी च )

**कांचुकीयः**—भोः ।

**सबंधिराज्यमिदमेत्य महान् प्रहर्षः**
**स्मृत्वा पुनर्नृपसुतानिधनं विषादः ।**
**किं नाम दैव! भवता न कृतं यदि स्या-**
**द्राज्यं परैरपहृतं कुशलं च देव्याः ॥५॥**

**प्रतीहारी**--एसो भट्टा, उवसप्पदु अय्यो । [ एष भर्ता, उपसर्पत्वार्यः ]

**कांचुकीयः**—( उपेत्य ) जयत्वार्यपुत्रः ।

**धात्री**—जेदु भट्टा । [ जयतु भर्ता ]

**राजा**—( सबहुमानम् ) आर्य ।

**पृथिव्यां राजवंश्यानामुदयास्तमयप्रभुः ।**
**अपि राजा स कुशली मया कांक्षितबांधवः ॥६॥**

**कांचुकीयः**—अथकिम् । कुशली महासेनः । इहापि सर्वगतं कुशलं पृच्छति ।

**राजा**—( आसनादुत्थाय ) किमाज्ञापयति महासेनः ।

**कांचुकीयः**—सदृशमेतद् वैदेहीपुत्रस्य । नन्वासनस्थेनैव भवता श्रोतव्यो महासेनस्य संदेशः ।

**राजा**—यदाज्ञापयति महासेनः । ( उपविशति )

*Padma.*—Nothing can be guarded when the time (of loss) comes.

*Prati.*--Here are Chamberlain and Nurse come to the door.

*King*—Bring them in at once.

*Prati.*—As the lord commands.

( *Then enter Chamberlain, Nurse and Pratihari* ).

*Cham.*--Oh !

I am very glad to come to a related kingdom; but dejection over-powers me when I remember that the princess is dead. O Fate! What would you not have done [ *i. e.* you would have done everything for the king], if the kingdom had been taken by others and the Queen had been safe? 5.

*Prati.*--Here is our lord. Sir, you may approach him.

*Cham.*--( *Approaching* ) Victory to the lord.

*Nurse*--Victory to the lord.

*King*--( *With great respect* ) Sir,

is the king well,-- he who makes and unmakes royal families on the earth,-- and whose relationship is sought? 6.

*Cham* --Yes. Mahasena is all right. He hopes [lit: enquires] here also all are doing well.

*King*--( *Getting up from the seat* ) What does Mahasena command?

*Cham.*--This is befitting the son of Vaidehi. You may take your seat and hear the message from Mahasena.

*King*--As Mahasena commands ( *sits* ).

**कांचुकीयः**—दिष्टया परैरपहृतं राज्यं पुनः प्रत्यानीतमिति कुतः,

**कातरा येऽप्यशक्ता वा नोत्साहस्तेषु जायते ।**
**प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ॥७॥**

**राजा**—आर्य । सर्वमेतन्महासेनस्य प्रभावः ।

**अहमवजितः पूर्वं तावत् सुतैः सह लालितो**
**दृढमपहृता कन्या भूयो मया न च रक्षिता ।**
**निधनमपि च श्रुत्वा तस्यास्तथैव मयि स्वता**
**ननु यदुचितान् वत्सान् प्राप्तुं नृपोऽत्र हि कारणम् ॥८॥**

**कांचुकीयः**—एष महासेनस्य संदेशः । देव्याः संदेशमिहात्रभवती कथयिष्यति ।

**राजा**—हा अंब !

**षोडशान्तःपुरज्येष्ठा पुण्या नगरदेवता ।**
**मम प्रवासदुःखार्ता माता कुशलिनी ननु ॥ ९ ॥**

**धात्री**—अरोआ भट्टिणी भट्टारं सव्वगदं कुसलं पुच्छदि । [अरोगा भट्टिनी भर्तारं सर्वगतं कुशलं पृच्छति]

**राजा**—सर्वगतं कुशलमिति । अम्ब ईदृशं कुशलम् ।

**धात्री**—मा दाणिं भट्टा अदिमत्तं सन्तप्पिदुं । [ मेदानीं भर्तातिमात्रं संतप्तुम् ]

**कांचुकीयः**—धारयत्वार्यपुत्रः । उपरताप्यनुपरता महासेनपुत्री एवमनुकम्प्यमानार्यपुत्रेण । अथवा,

**कः कं शक्तो रक्षितुं मृत्युकाले**
**रज्जुच्छेदे के घटं धारयन्ति ।**
**एवं लोकस्तुल्यधर्मो वनानां**
**काले काले छिद्यते रुह्यते च ॥ १० ॥**

*Cham.*--Fortunately, the kingdom that was taken by the enemies is recovered. Because,

there is no spirit in those who are timid or powerless. Generally, the regal splendour is enjoyed only by the energetic. 7.

*King*--Sir, all this is due to the prowess of Mahasena.

First I was captured and then fondled along with his sons. His daughter was forcibly taken away by me and yet not protected. Even on hearing of her death, he looks upon me as his own, as before. Now that I have recovered the Vatsa, my proper country, is also due to the king. 8.

*Cham.*--This is the message from Mahasena. Her ladyship here will tell the message from the queen.

*King*--Alas! mother!

Is my mother well— she who is the senior among sixteen queens, sacred goddess of the city, and who grieved at my departure? 9.

*Nurse*-- The Queen is alright, and hopes all are well here.

*King*--All well! Mother, well thus!!

*Nurse*-- Lord, do not make yourself so greatly perturbed.

*Cham.*--Have courage, my lord. The daughter of Mahasena is alive though dead, when she is thus lamented by my lord. Or,

who is able to protect whom at the time of death? When the rope breaks, who can stop the pitcher? Thus the people resemble the forests that they are often cut down and are growing. 10.

**राजा**—आर्य ! मा मैवं,

**महासेनस्य दुहिता शिष्या देवी च मे प्रिया ।**
**कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि ॥ ११ ॥**

**धात्री**—आह भट्टिणी– उवरदा वासवदत्ता । मम वा महासेणस्स वा जादिसा गोवाळअपाळआ तादिसो एव्व तुमं पुढमं एव्व अभिप्पेदो जामादुअत्ति । एदण्णिमित्त उज्जइणिं आणीदो । अणग्गिसक्खिअं वीणाववदेसेण दिण्णा । अत्तणो चवळदाए अणिव्वुत्तविवाहमंगळो एव्व गदो । अहअ अह्मेहिं तव अ वादवदत्ताए अ पडिकिदिं चित्तफळआए आळिहिअ विहाहो णिव्वुत्तो । एसा चित्तफळआ तव सआसं पेसिदा । एदं पेक्खिअ णिव्वुदो होहि । [आह भट्टिनी –उपरता वासवदत्ता । मम वा महासेनस्य वा यादृशौ गोपालकपालकौ, तादृश एव त्वं प्रथममेवाभिप्रेतो जामातेति । एतन्निमित्तमुज्जयिनीमानीतः । अनग्निसाक्षिकं वीणाव्यपदेशेन दत्ता । आत्मनश्चपलतयाऽनिर्वृत्तविवाहमंगल एव गतः । अथचावाभ्यां तव च वासवदत्तायाश्च प्रतिकृतिं चित्रफलकायामालिख्य विवाहो निर्वृत्तः । एषा चित्रफलका तव सकाशं प्रेषिता । एतां प्रेक्ष्य निर्वृतो भव]

**राजा**—अहो अतिस्निग्धमनुरूपं चाभिहितं तत्रभवत्या ।

**वाक्यमेतत् प्रियतरं राज्यलाभशतादपि ।**
**अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः ॥ १२ ॥**

**पद्मावती**—अय्यउत्त! चित्तगदं गुरुअणं पेक्खिअ अभिवादेदुं इच्छामि । [ आर्यपुत्र! चित्रगतं गुरुजनं प्रेक्ष्याभिवादयितुमिच्छामि ]

**धात्री**—पेक्खदु पेक्खदु भट्टिदारिआ । ( चित्तफलकां दर्शयति ) [प्रेक्षतां प्रेक्षतां भर्तृदारिका] (चित्रफलकां दर्शयति)

**पद्मावती**—( दृष्ट्वा आत्मगतम् ) हं अदिसदिसी खु इअं अय्याए आवान्तिआए । ( प्रकाशम् ) अय्यउत्त ! सादिसी खु इअं अय्याए । [दृष्ट्वा आत्मगतं, हम् अतिसदृशी खल्वियमार्याया आवंतिकायाः । (प्रकाशं, आर्यपुत्र ! सदृशी खल्वियमार्यायाः]

*King*—Si:, no, no;

the daughter of Mahasena, my disciple, my beloved queen, how can I cease to remember her even in another life [lit: body] ? 11.

*Nurse*--The queen says--"Vasavadatta is dead; as Gopalaka and Palaka are to me or to Mahasena, so you are, even from the first, our beloved son-in-law. For this purpose you were brought to Ujjayini. Vasavadatta was given to you on the pretext of (being taught to play on) 'Vina', and not in the presence of fire. You, with your freshness, went away without the marriage ceremony being performed. Then we performed the marriage ceremony, painting on a picture-board the likeness of you and of Vasavadatta. This picture-board is sent to you. Look at it and be happy."

*King*--Oh ! Her ladyship speaks most loving and befitting words.

These words are dearer than hundred acquisitions of kingdoms; because, though we were at fault, affection towards us is not forgotten. 12.

*Padma.*--My lord, I wish to bow on looking at the elders in painting.

*Nurse*--The princess may see it. (*Shows the picture-board*).

*Padma.*—(*Seeing it, to herself*) Oh ! Indeed, she very much resembles madam Avantika. (*Openly*, My dear, does she resemble the Queen ?

**राजा**—न सदृशी । सैवेति मन्ये । भोः कष्टम्,

**अस्य स्निग्धस्य वर्णस्य विपत्तिर्दारुणा कथम् ।**
**इदं च मुखमाधुर्यं कथं दूषितमग्निना ॥ १३ ॥**

**पद्मावती**—अय्यउत्तस्स पडिकिदिं पेक्खिअ जाणामि इअं अय्याए सदिसी ण वेत्ति । [आर्यपुत्रस्य प्रतिकृतिं प्रेक्ष्य जानामीयमार्याया सदृशी नं वेति]

**धात्री**—पेक्खदु पेक्खदु भट्टिदारिआ । [प्रेक्षतां प्रेक्षतां भर्तृदारिका]

**पद्मावती**—( दृष्ट्वा ) अय्यउत्तस्स पडिकिदीए सदिसदाए जाणामि इअं अय्याए सदिसि त्ति । [आर्यपुत्रस्य प्रतिकृत्याः सदृशतया जानामीयमार्यया सदृशीति]

**राजा**—देवि ! चित्रदर्शनात् प्रभृति प्रहृष्टोद्विग्नामिव त्वां पश्यामि। किमिदम् ?

**पद्मावती**—अय्यउत्त ! इमाए पडिकिदीए सदिसी इह एव्व पडिवसदि । [ आर्यपुत्र ! अस्याः प्रतिकृत्याः सदृशीह प्रतिवसति]

**राजा**—किं वासवदत्तायाः ?

**पद्मावती**—आम् ।

**राजा**—तेन हि शीघ्रमानीयताम् ।

**पद्मावती**—अय्यउत्त ! मम कण्णाभावे केणवि बह्मणेण मम भइणिआत्ति ण्णासो णिक्खित्तो । पोसिदभत्तुआ परपुरुसदंसणं परिहरदि । ता अय्यं मए सह आअदं पेक्खिअ जाणादु अय्यउत्तो । [ आर्यपुत्र मम कन्याभावे केनापि ब्राह्मणेन मम भगिनिकेति न्यासो निक्षिप्तः । प्रोषितभर्तृका परपुरुषदर्शनं परिहरति । तदार्यां मया सहागतां प्रेक्ष्य जानात्वार्यपुत्रः ]

**राजा**—

**यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति ।**
**परस्परगता लोके दृश्यते रूपतुल्यता ॥ १४ ॥**

*King*--Not resemblance, but I think it is she herself! Oh! The misery!

How a great calamity befell this beautiful colour, and how was this sweetness of face marred by fire? 13.

*Padma.*—After having seen the likeness of my lord, I shall know if this resembles the queen.

*Nurse*—Princess, have a look at it.

*Padmā.*—As the portraying of my lord is accurate, I know this also resembles the queen.

*King*—Queen, since you saw the portraits, I see you are joyful and (also) joyless. What is this?

*Padma.*—My lord, there lives one here who resembles this delineation.

*King*—What? of Vasavadatta?

*Padma.*—Yes.

*King*—Then bring her in at once.

*Padma.*—My lord, before (our) marriage, a certain Brahmana left her here saying she was his sister. Her husband having gone on travels, she avoids the sight of other men. Therefore my lord may recognise her looking at her when she accompanies me.

*King*—

If she is the sister of a Brahmana, certainly she must be some one el-e; in the world is seen similarity of features in different persons. 14.

**प्रतीहारी**—जेदु भट्टा । एसो उज्जइणीओ बह्मणो, भट्टिणीए हत्थे मम भइणिअ त्ति ण्णासो णिक्खित्तो, तं पडिग्गहिदुं पडिहारं उवट्ठिदो । [जयतु भर्ता । एष उज्जयिनीयो ब्राह्मणः, भट्टिन्या हस्ते मम भगिनिकेति न्यासो निक्षिप्तः, तं प्रतिग्रहीतुं प्रतिहारमुपास्थितः]

**राजा**—पद्मावति ! किन्नु स ब्राह्मणः

**पद्मावती**—होदव्वं । [ भवितव्यम् ]

**राजा**—शीघ्रं प्रवेश्यतामभ्यंतरसमुदाचारेण स ब्राह्मणः ।

**प्रतीहारी**—जं भट्टा आणवेदि [यद्भर्ताज्ञापयति] (निष्क्रान्ता)

**राजा**—पद्मावति ! त्वमपि तामानय ।

**पद्मावती**—जं अय्यउत्तो आणवेदि [यदार्यपुत्र आज्ञापयति] (निष्क्रान्ता)

( ततः प्रविशति यौगंधरायणः प्रतीहारी च )

**यौगंधरायणः**—(आत्मगतम्) भोः !

**प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं**
**कामं मया कृतमिदं हितमित्यवेक्ष्य ।**
**सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ**
**किं वक्ष्यतीति हृदयं परिशंकितं मे ॥१५॥**

Imp. 42

**प्रतीहारी**—एसो भट्टा । उवसप्पदु अय्यो । [एष भर्ता । उपसर्पत्वार्यः]

**यौगंधरायणः**—(उपसृत्य) जयतु भवान् जयतु ।

**राजा**—श्रुतपूर्व इव स्वरः । भो ब्राह्मण ! किं भवतः स्वसा पद्मावत्या हस्ते न्यास इति निक्षिप्ता ?

**यौगंधरायणः**—अथ किम् ।

**राजा**—तेन हि त्वर्यतां त्वर्यतामस्य भागिनिका ।

**प्रतीहारी**—जं भट्टा आणवेदि । [यद् भर्ताज्ञापयति] (निष्क्रान्ता)

( *Entering* )

*Prati.*—Victory to the lord. Here is a Brahmana from Ujjavini who has come to the door to receive back the deposit, his sister, given in charge of the queen.

*King*—Padmavati, is he that Brahmana?

*Padma.*—May be.

*King*—Bring the Brahmana in at once, with proper reception.

*Doorkeeper.*—As my lord commands. [ *Exit.*

*King*—Padmavati, you bring her also.

*Padma.*—As my lord commands. [ *Exit*

( *Then enter Yaugandharayana and the door-keeper*).

*Yaugan.*—Oh! ( *To himself* ) concealing the queen, I did this for the good of the king thinking it advantageous to him. Though my object is accomplished, my mind misgives me as to what the king will say. 15.

*Door.*—Here is my lord. Sir, you may approach.

*Yaugan.*—( *Approaching* ) Victory to you, Victory to you.

*King*—I seem to have heard this voice before. O Brahmana! Is it that your sister was kept with Padmavati as a deposit?

*Yaugan.*—Yes.

*King*—Then, let his sister be brought at once.

*Doorkeeper*—As my lord commands. [*Exit*.

(ततः प्रविशति पद्मावती आवंतिका प्रतीहारी च)

**पद्मावती**—एदु एदु अय्या । पिअं दे णिवेदेमि । [एत्वेत्वार्या । प्रियं ते निवेदयामि]

**आवंतिका**--किं किं ?

**पद्मावती**--भादा दे आअदो ! [भ्राता ते आगतः]

**आवंतिका**--दिट्ठिआ इदाणिं पि सुमरदि । [ दिष्टयेदानीमपि स्मरति ]

**पद्मावती**--( उपसृत्य ) जेदु अय्यउत्तो । एसो णासो । [जयत्वार्यपुत्रः । एष न्यासः]

**राजा**—निर्यातय पद्मावति । साक्षिमान् न्यासो नियातयितव्यः । इहात्रभवान् रैभ्यः, अत्रभवती चाधिकरणं भविष्यतः ।

**पद्मावती**--अय्य ! णीअदां दाणिं अय्या । [आर्य ! नीयतामिदानीमार्या ]

**धात्री**—(आंवतिकां निर्वर्ण्य) अम्मो भट्टिदारिआ वासवदत्ता ! [अम्मो भर्तुदारिका वासवदत्ता]

**राजा**—कथं महासेनपुत्री? देवि! प्रविश त्वमभ्यंतरं पद्मावत्या सह !

**यौगंधरायणः**—नखलु नखलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा ।

**राजा**—किं भवानाह । महासेनपुत्री खल्वेषा !

**यौगंधरायणः**—भो राजन् ।

**भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।**
**तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः ॥ १६ ॥**

**राजा**—भवतु पश्यामस्तावद्रूपसादृश्यम् । संक्षिप्यतां यवनिका ।

*( Then enter Padmavati, Avantika and the door-Keeper ).*

*Padmā.*—Madam, you may come, you may come. I have to tell you a happy news.

*Avantika.*—What ? What ?

*Padmā.*—Your brother has come.

*Avantika*—Fortunately, he does remember me even now !

*Padma.*—(*Approaching*) Victory to my lord. This is the deposit.

*King*—Padmavati, hand it back. A deposit should be returned in the presence of witnesses. Here, worthy Raibhyasa and her ladyship will be the judges.

*Padma.*—Sir, madam can be taken back now.

*Nurse*—( *Looking intently at Avantika* ) Oh ! Princess Vasavadatta !

*King*—What ? The daughter of Mahasena ? Queen, go inside with Padmavati.

*Yaugan.*—No, no; do not go in. She is really my sister.

*King*—What do you say ? Really she is the daughter of Mahasena !

*Yaugan.*—O king,

it is not proper for you to take her with force, —you who are born in the race of the Bharatas, who are well-educated, learned, virtuous and the teacher of kingly duties. 16.

*King*—Well, let us see the similarity of features. Let the veil be taken off.

**यौगंधरायण**:—जयतु स्वामी।

**वासवदत्ता**—जेदु अय्यउत्तो। [जयत्वार्यपुत्रः]

**राजा**—अये असौ यौगंधरायणः, इयं महासेनपुत्री।

**किन्तु सत्यमिदं स्वप्नः सा भूयो दृश्यते मया।**
**अनयाप्येवमेवाहं दृष्ट्या वंचितस्तदा ॥१७॥**

**यौगंधरायण**:—स्वामिन्! देव्यपनयेन कृतापराधः खल्वहम्। तत् क्षन्तुमर्हति स्वामी। (पादयोः पतति)

**राजा**—(उत्थाप्य) यौगंधरायणो भवान् ननु।

**मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मंत्रितैः।**
**भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः ॥१८॥**

**यौगंधरायण**:—स्वामिभाग्यानामनुगन्तारो वयम्।

**पद्मावती**—अम्महे अय्या खु इअं। अय्ये! सहीजणसमुदाआरेण अदिक्कं समुदाआरो। ता सीसेण पसादेमि। [अहो आर्या खल्वियम्। आर्ये! सखीजनसमुदाचारेणातिक्रान्तः समुदाचारः तत् शीर्षेण प्रसादयामि]

**वासवदत्ता**—(पद्मावतीमुत्थाप्य) उट्ठेहि अविहवे! उट्ठेहि! अत्थिअं णाम सरीरं अवरद्धइ। [उत्तिष्ठोत्तिष्ठाविधवे! उत्तिष्ठ! अर्थिस्वं नाम शरीरमपराध्यति]

**पद्मावती**—अणुग्गहिदह्मि। [अनुगृहीतास्मि]

**राजा**—वयस्य यौगंधरायण! देव्यपनये का कृता ते बुद्धि!

**यौगंधरायण**:—कौशांबीमात्रं परिपालयामीति।

*Yaugan.*--Victory to the lord.

*Vasava.*—Victory to my lord.

*King*— Oh ! This is Yaugandharayana, and this the daughter of Mahasena !

Is this a fact ? Or a dream ? That she is seen by me again ? At that time, this very sight deceived me in this very way. 17.

*Yaugan.*--My lord, indeed, I am guilty, because of taking away the Queen; that my lord deserves to forgive me. (*Falls at his feet*).

*King*--(*Raising him up*) Really, you are that Yaugandharayana !

We, when plunged in misery, were saved by your efforts--pretended madness, fights and counsels accepted by authoritative books. 18.

*Yaugan.*--We are followers of the fortunes of our lord.

*Padma.*--Oh ! Indeed she is the Queen ! Madam, decorum was not observed while treating you as a friend; therefore I propitiate you by (placing my) head (at your feet).

*Vasava.*—(*Raising Padmavati*) Get up, get up, blessed lady [*Avidhavā*]. It was my body that was at fault as belonging to one who was a supplicant.

*Padma.*—It is a favour to me.

*King*--Friend Yaugandharayana, what was your object in taking away the Queen ?

*Yaugan.*--That I should be defending only Kaushambi.

राजा—अथ पद्मावत्या हस्ते किं न्यासकारणम् ?

यौगंधरायणः—पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति।

राजा—इदमपि रुमण्वता ज्ञातम्।

यौगंधरायणः—स्वामिन्! सर्वैरेव ज्ञातम्।

राजा—अहो शठः शठः खलु रुमण्वान्।

यौगंधरायणः—स्वामिन्! देव्याः कुशलनिवेदनार्थमद्यैव प्रतिनिवर्ततामत्रभवान् रैभ्योऽत्रभवती च।

राजा—न न, सर्वे वयं यास्यामो देव्या पद्मावत्या सह।

(भरतवाक्यम्)

इमां सागरपर्यंतां हिमवद्विंध्यकुंडलाम्।
महीमेकातपत्रांकां राजसिंहः प्रशास्तु नः ॥१९॥

(निष्क्रान्ताः सर्वे) इति षष्ठोऽङ्कः।

इति स्वप्नवासवदत्तं समाप्तम्॥

———:o:———

*King*--Why was she deposited with Padmavati ?

*Yaugan.*—Because Pushakabhadra and other foretellers had predicted that she would become the queen of my lord.

*King*--Was this known to Rumanvan also ?

*Yaugan.*—My lord, it was known to all.

*King*--Oh ! A rogue that Rumanvān is !

*Yaugan.*--My lord, let this worthy Raibhya and her ladyship start to day to convey the glad news to the queen.

*King*--No, no. All of us will go including queen Padmāvati.

(*Bharata-Vākya*)

May our Rajasimha rule over this earth bounded by the ocean, having the Himalaya and Vindhya as the ear-rings and brought under one sceptre ! 19.

[*Exeunt all.*

*Ends the sixth Act.*

——o——

*Here ends the play called*

SVAPNAVASAVADATTA.

——:o:——

# POPULAR EDITION

OF THE

# Works of Shankaracharya.

*IN ORIGINAL SANSKRIT.*

**VOl. I. Gita With Bhashya.** **Rs. two.**

**,, II. Ten principal Upanishads with Bhashya.** **Rs. eleven.**

**,, III. Brahmasutras with Bhashya. Rs. three.**

**,, IV. Miscellaneous works.** **Rs. four.**

[ **Contents.**—Aparokshanubuti, Atmabodha, Tattvopadesha, Brahmajnavalimala, Vakyavritti, Sadacharanusandhana, Svatmaniruhana, Advaitanubhuti, Dashashloki, Prabodhasudhakara, Prashnottararatnamalika, Brahmanuchintana, Mohamudgara, Yogatarayvali, Shatashloki, Svatmaprakashika Sarvavedantasiddhantasarasangraha, Vivekachudamani, Upadeshasahasri, Vedanta stotras, Devotional stotras, Sanatsujatiyabhashya and Vishnusahasranamabhashya. ]

**Ashtekar & Co. Poona city.**